॥ श्रीजैनग्रन्थप्रकाशकसभाप्रकाशितग्रन्थमालाग्रन्थरत्नानि ॥

योगदृष्टिसमुच्चय-योगबिन्दु-षोडशक-शास्त्रवार्तासमुच्चय-षड्दर्शनसमुच्चय-द्वात्रिंशदष्टकप्रकरण-लोकतत्त्वनिर्णय-धर्मबिन्दुप्रकरण-हिंसाफलाष्टक-सर्वज्ञसिद्धिस्वरूपः संस्कृतभाषानिबद्धः

# ॥ श्रीहरिभद्रसूरिग्रन्थसङ्ग्रहः ॥

स चायं-श्रीराजनगर( अहम्मदावाद )स्थ श्रीजैनग्रन्थप्रकाशकसभया

भावनगरस्थ गुलाबचन्द्र लल्लुभाई सत्ताक सुप्रसिद्ध महोदय मुद्रणालये मुद्रयित्वा प्राकाश्यं प्रापितः ॥

विक्रम सं. १९९५ | श्रीवीरनिर्वाण सं. २४६५ | सन् १९३९

॥ ॐ अर्हं नमः ॥

भव्यसत्त्वानुग्रहसंस्कृतप्राकृतगद्यपद्यात्मानेकलक्षप्रमितविरहाङ्कचतुश्चत्वारिंशदुत्तरचतुर्दशशतशास्त्र-प्रासादसूत्रणसूत्रधार-पूर्वधरासन्नकालवर्ति-सुविहिताग्रणी-सूरिपुरन्दरश्रीमद्धरिभद्रसूरिप्रणी-तानि योगदृष्टिसमुच्चय-योगबिन्दु-षोडशक-शास्त्रवार्तासमुच्चयादीनि प्रकरणरत्नानि

( तत्रायं प्रथमः )।

# ॥ योगदृष्टिसमुच्चयः ॥



नत्वेच्छायोगतोऽयोगं योगिगम्यं जिनोत्तमम्। वीरं वक्ष्ये समासेन योगं तद्दृष्टिभेदतः ॥ १ ॥

इहैवेच्छादियोगानां स्वरूपमभिधीयते । योगिनामुपकाराय व्यक्तं योगप्रसङ्गतः ॥ २ ॥

कर्तुमिच्छोः श्रुतार्थस्य ज्ञानिनोऽपि प्रमादतः। विकलो धर्मयोगो यः स इच्छायोग उच्यते ॥ ३ ॥

शास्त्रयोगस्त्विह ज्ञेयो यथाशक्त्यप्रमादिनः। श्राद्धस्य तीव्रबोधेन वचसाऽविकलस्तथा ॥ ४ ॥

शास्त्रसन्दर्शितोपायस्तदतिक्रान्तगोचरः । शक्त्युद्रेकाद्विशेषेण सामर्थ्याख्योऽयमुत्तम ॥ ५ ॥
सिद्ध्याख्यपदसम्प्राप्तिहेतुभेदा न तत्त्वतः । शास्त्रादेवावगम्यन्ते सर्वथैवेह योगिभि ॥ ६ ॥
सर्वथा तत्परिच्छेदात्साक्षात्कारित्वयोगत । तत्सर्वज्ञत्वसंसिद्धेस्तदा सिद्धिपदाप्तित ॥ ७ ॥
न चैतदेवं यत्तस्मात्प्रातिभज्ञानसङ्गत । सामर्थ्ययोगोऽवाच्योऽस्ति सर्वज्ञत्वादिसाधनम् ॥ ८ ॥
द्विधाऽयं धर्मसन्न्यासयोगसन्न्याससंज्ञित । क्षायोपशमिका धर्मा योगा कायादिकर्म तु ॥ ९ ॥
द्वितीयापूर्वकरणे प्रथमस्तात्त्विको भवेत् । आयोज्यकरणादूर्ध्वं द्वितीय इति तद्विद ॥ १० ॥
अतस्त्वयोगो योगानां योग पर उदाहृत । मोक्षयोजनभावेन सर्वसन्न्यासलक्षण ॥ ११ ॥
एतत्त्रयमनाश्रित्य विशेषेणैतदुद्भवा । योगदृष्टय उच्यन्ते अष्टौ सामान्यतस्तु ता ॥ १२ ॥
मित्रा तारा बला दीप्रा स्थिरा कान्ता प्रभा परा । नामानि योगदृष्टीनां लक्षणं च निबोधत ॥ १३ ॥
समेघामेघरात्र्यादौ सग्रहाद्यर्भकादिवत् । ओघदृष्टिरिह ज्ञेया मिथ्यादृष्टीतराश्रया ॥ १४ ॥
तृणगोमयकाष्ठाग्निकणदीपप्रभोपमा । रत्नतारार्कचन्द्राभा सद्दृष्टेर्दृष्टिरष्टधा ॥ १५ ॥

यमादियोगयुक्तानां[1] खेदादिपरिहारतः[2] । अद्वेषादिगुणस्थानं[3] क्रमेणैषा सतां मता ॥ १६ ॥
सच्छ्रद्धासंगतो बोधो दृष्टिरित्यभिधीयते । असत्प्रवृत्तिव्याघातात्सत्प्रवृत्तिपदावहः ॥ १७ ॥
इयं चावरणापायभेदादष्टविधा स्मृता । सामान्येन विशेषास्तु भूयांसः सूक्ष्मभेदतः ॥ १८ ॥
प्रतिपातयुताश्चाद्याश्चतस्रो नोत्तरास्तथा । सापाया अपि चैतास्तत्प्रतिपातेन नेतराः ॥ १९ ॥
प्रयाणभङ्गाभावेन निशि स्वापसमः पुनः । विघातो दिव्यभवतश्चरणस्योपजायते ॥ २० ॥
मित्रायां दर्शनं मन्दं यम इच्छादिकस्तथा । अखेदो देवकार्यादावद्वेषश्चापरत्र तु ॥ २१ ॥
करोति योगबीजानामुपादानमिह स्थितः । अवन्ध्यमोक्षहेतूनामिति योगविदो विदुः ॥ २२ ॥
जिनेषु कुशलं चित्तं तन्नमस्कार एव च । प्रणामादि च संशुद्धं योगबीजमनुत्तमम् ॥ २३ ॥
चरमे पुद्गलावर्ते तथाभव्यत्वपाकतः । संशुद्धमेतन्नियमान्नान्यदापीति तद्विदः ॥ २४ ॥

---

१ यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥ २ खेदोद्वेगक्षेपोत्थानभ्रान्त्यन्यमुद्रुगासङ्गैः ॥ युक्तानि हि चित्तानि प्रपञ्चतो वर्जयेन्मतिमान् ॥१॥ ३ अद्वेषो जिज्ञासा शुश्रूषा श्रवणबोधमीमांसाः ॥ परिशुद्धा प्रतिपत्तिः प्रवृत्तिरष्टात्मिका तत्त्वे ॥१॥

उपादेयधियाऽत्यन्त सञ्ज्ञाविष्कम्भणान्वितम् । फलाभिसन्धिरहित सशुद्ध ह्येतदीदृशम् ॥ २५ ॥
आचार्यादिष्वपि ह्येतद्विशुद्ध भावयोगिषु । वैयावृत्त्य च विधिवच्छुद्धाशयविशेषतः ॥ २६ ॥
भवोद्वेगश्च सहजो द्रव्याभिग्रहपालनम् । तथा सिद्धान्तमाश्रित्य विधिना लेखनादि च ॥ २७ ॥
लेखना पूजना दानं श्रवण वाचनोद्ग्रह । प्रकाशनाथ स्वाध्यायश्चिन्तना भावनेति च ॥ २८ ॥
बीजश्रुतौ च सवेगात्प्रतिपत्ति स्थिराशया । तदुपादेयभावश्च परिशुद्धो महोदय ॥ २९ ॥
एतद्भावमले क्षीणे प्रभूते जायते नृणाम् । करोत्यव्यक्तचैतन्यो महत्कार्यं न यत्क्वचित् ॥ ३० ॥
चरमे पुद्गलावर्ते क्षयश्चास्योपपद्यते । जीवानां लक्षण तत्र यत एतदुदाहृतम् ॥ ३१ ॥
दुःखितेषु दयात्यन्तमद्वेषो गुणवत्सु च । औचित्यात्सेवन चैव सर्वत्रैवाविशेषत ॥ ३२ ॥
एवविधस्य जीवस्य भद्रमूर्तेर्महात्मन । शुभो निमित्तसयोगो जायतेऽवञ्चकोदयात् ॥ ३३ ॥
योगक्रियाफलाख्य यच्छ्रूयतेऽवञ्चकत्रयम् । साधूनाश्रित्य परमामिषुलक्ष्यक्रियोपमम् ॥ ३४ ॥
एतच्च सत्प्रणामादिनिमित्त समये स्थितम् । अस्य हेतुश्च परमस्तथाभावमलाल्पता ॥ ३५ ॥

नास्मिन् घने यतः सत्सु तत्प्रतीतिर्महोदया । किं सम्यग् रूपमादत्ते कदाचिन्मन्दलोचनः ॥ ३६ ॥

अल्पव्याधिर्यथा लोके तद्विकारैर्न बाध्यते । चेष्टते चेष्टसिद्ध्यर्थं वृत्त्यैवायं तथा हिते ॥ ३७ ॥

यथाप्रवृत्तिकरणे चरमेऽल्पमलत्वतः । आसन्नग्रन्थिभेदस्य समस्तं जायते ह्यदः ॥ ३८ ॥

अपूर्वासन्नभावेन व्यभिचारवियोगतः । तत्त्वतोऽपूर्वमेवेदमिति योगविदो विदुः ॥ ३९ ॥

प्रथमं यद्गुणस्थानं सामान्येनोपवर्णितम् । अस्यां तु तदवस्थायां मुख्यमन्वर्थयोगतः ॥ ४० ॥

तारायां तु मनाक्स्पष्टं नियमश्च तथाविधः । अनुद्वेगो हितारम्भे जिज्ञासा तत्त्वगोचरा ॥ ४१ ॥

भवत्यस्यां तथाऽच्छिन्ना प्रीतिर्योगकथास्वलम् । शुद्धयोगेषु नियमाद्बहुमानश्च योगिषु ॥ ४२ ॥

यथाशक्त्युपचारश्च योगवृद्धिफलप्रदः । योगिनां नियमादेव तदनुग्रहधीयुतः ॥ ४३ ॥

लाभान्तरफलश्चास्य श्रद्धायुक्तो हितोदयः । क्षुद्रोपद्रवहानिश्च शिष्टसम्मतता तथा ॥ ४४ ॥

भयं नातीव भवजं कृत्यहानिर्न चोचिते । तथानाभोगतोऽप्युच्चैर्न चाप्यनुचितक्रिया ॥ ४५ ॥

कृत्येऽधिकेऽधिकगते जिज्ञासा लालसान्विता । तुल्ये निजे तु विकले संत्रासो द्वेषवर्जितः ॥ ४६ ॥

दु:खरूपो भवः सर्व उच्छेदोऽस्य कुत कथम्। चित्रा सतां प्रवृत्तिश्च साशेषा ज्ञायते कथम्? ॥ ४७ ॥
नास्माक महती प्रज्ञा सुमहान् शास्त्रविस्तर । शिष्टा प्रमाणमिह तादित्यस्यां मन्यते सदा ॥ ४८ ॥
सुखासनसमायुक्त बलायां दर्शन दृढम् । परा च तत्त्वशुश्रूषा न क्षेपो योगगोचर ॥ ४९ ॥
नास्या सत्यामसत्तृष्णा प्रकृत्यैव प्रवर्तते । तदभावाच्च सर्वत्र स्थितमेव सुखासनम् ॥ ५० ॥
अत्वरापूर्वक सर्वं गमन कृत्यमेव वा । प्रणिधानसमायुक्तमपायपरिहारत ॥ ५१ ॥
कान्तकान्तासमेतस्य दिव्यगेयश्रुतौ यथा । यूनो भवति शुश्रूषा तथास्यां तत्त्वगोचरा ॥ ५२ ॥
बोधाम्भ स्रोतसश्चैषा सिरातुल्या सतां मता । अभावेऽस्या श्रुत व्यर्थमसिरावनिकूपवत् ॥ ५३ ॥
श्रुताभावेऽपि भावेऽस्या शुभभावप्रवृत्तित । फल कर्मक्षयाख्य स्यात्परबोधनिबन्धनम् ॥ ५४ ॥
शुभयोगसमारम्भे न क्षेपोऽस्यां कदाचन । उपायकौशल चापि चारु तद्विषय भवेत् ॥ ५५ ॥
परिष्कारगत प्रायो विघातोऽपि न विद्यते । अविघातश्च सावद्यपरिहारान्महोदय ॥ ५६ ॥
प्राणायामवती दीप्रा न योगोत्थानवत्यलम् । तत्त्वश्रवणसयुक्ता सूक्ष्मबोधविवर्जिता ॥ ५७ ॥

प्राणेभ्योऽपि गुरुर्धर्मः सत्यामस्यामसंशयम् । प्राणांस्त्यजाति धर्मार्थं न धर्मं प्राणसङ्कटे ॥ ५८ ॥

एक एव सुहृद्धर्मो मृतमप्यनुयाति यः । शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ ५९ ॥

इत्थं सदाशयोपेतस्तत्त्वश्रवणतत्परः । प्राणेभ्यः परमं धर्मं बलादेव प्रपद्यते ॥ ६० ॥

क्षाराम्भस्त्यागतो यद्वन्मधुरोदकयोगतः । बीजं प्ररोहमाधत्ते तद्वत्तत्त्वश्रुतेर्नरः ॥ ६१ ॥

क्षाराम्भस्तुल्य इह च भवयोगोऽखिलो मतः । मधुरोदकयोगेन समा तत्त्वश्रुतिस्तथा ॥ ६२ ॥

अतस्तु नियमादेव कल्याणमखिलं नृणाम् । गुरुभक्तिसुखोपेतं लोकद्वयहितावहम् ॥ ६३ ॥

गुरुभक्तिप्रभावेन तीर्थकृद्दर्शनं मतम् । समापत्त्यादिभेदेन निर्वाणैकनिबन्धनम् ॥ ६४ ॥

सम्यग्घेत्वादिभेदेन लोके यस्तत्त्वनिर्णयः । वेद्यसंवेद्यपदतः सूक्ष्मबोधः स उच्यते ॥ ६५ ॥

भवाम्भोधिसमुत्तारात्कर्मवज्रविभेदतः । ज्ञेयव्याप्तेश्च कार्त्स्न्येन सूक्ष्मत्वं नायमत्र तु ॥ ६६ ॥

अवेद्यसंवेद्यपदं यस्मादासु तथोल्बणम् । पक्षिच्छायाजलचरप्रवृत्त्याभमतः परम् ॥ ६७ ॥

अपायशक्तिमालिन्यं सूक्ष्मबोधविबन्धकृत् । नैतद्वतोऽयं तत्तत्त्वे कदाचिदुपजायते ॥ ६८ ॥

अपायदर्शनं तस्माच्छ्रुतदीपान्न तात्त्विकम् । तदाभालम्बनं त्वस्य तथा पापे प्रवृत्तितः ॥ ६९ ॥

अतोऽन्यदुत्तरास्वस्मात्पापे कर्मागसोऽपि हि । तप्तलोहपदन्यासतुल्या वृत्तिः क्वचिद्यदि ॥ ७० ॥

वेद्यसंवेद्यपदतः संवेगातिशयादिति । चरमैव भवत्येषा पुनर्दुर्गत्ययोगतः ॥ ७१ ॥

अवेद्यसंवेद्यपदमपदं परमार्थतः । पदं तु वेद्यसंवेद्यपदमेव हि योगिनाम् ॥ ७२ ॥

वेद्यं संवेद्यते यस्मिन्नपायादिनिबन्धनम् । तथाप्रवृत्तिबुद्ध्यापि स्त्र्याद्यागमविशुद्धया ॥ ७३ ॥

तत्पदं साध्ववस्थानाद्भिन्नग्रन्थ्यादिलक्षणम् । अन्वर्थयोगतस्तन्त्रे वेद्यसंवेद्यमुच्यते ॥ ७४ ॥

अवेद्यसंवेद्यपदं विपरीतमतो मतम् । भवाभिनन्दिविषयं समारोपसमाकुलम् ॥ ७५ ॥

क्षुद्रो लाभरतिर्दीनो मत्सरी भयवान् शठः । अज्ञो भवाभिनन्दी स्यान्निष्फलारम्भसङ्गतः ॥ ७६ ॥

इत्यसत्परिणामानुविद्धो बोधो न सुन्दरः । तत्सङ्गादेव नियमाद्विषसम्पृक्तकान्नवत् ॥ ७७ ॥

एतद्वन्तोऽत एवेह विपर्यासपरा नराः । हिताहितविवेकान्धा खिद्यन्ते साम्प्रतेक्षिणः ॥ ७८ ॥

जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतम् । वीक्षमाणा अपि भवं नोद्विजन्तेऽतिमोहतः ॥ ७९ ॥

कुकृत्यं कृत्यमाभाति कृत्यं चाकृत्यवत्सदा । दुःखे सुखाधियाकृष्टाः कच्छूकण्डूयका॥ ॥ ८० ॥

यथा कण्डूयनेष्वेषां धीर्न कच्छूनिवर्तने । भोगाङ्गेषु तथैतेषां न तदिच्छापरिक्षये ॥ ८१ ॥

आत्मानं पाशयन्त्येते सदासच्चेष्टया भृशम् । पापधूल्या जडाः कार्यमविचार्यैव तत्त्वतः ॥ ८२ ॥

धर्मबीजं परं प्राप्य मानुष्यं कर्मभूमिषु । न सत्कर्मकृषावस्य प्रयतन्तेऽल्पमेधसः ॥ ८३ ॥

वडिशामिषवत्तुच्छे कुसुखे दारुणोदये । सक्तास्त्यजन्ति सच्चेष्टां धिगहो ! दारुणं तमः ॥ ८४ ॥

अवेद्यसंवेद्यपदमान्ध्यं दुर्गतिपातकृत् । सत्सङ्गागमयोगेन जेयमेतन्महात्मभिः ॥ ८५ ॥

जीयमाने च नियमादेतस्मिंस्तत्त्वतो नृणाम् । निवर्तते स्वतोऽत्यन्तं कुतर्कविषमग्रहः ॥ ८६ ॥

बोधरोगः शमापायः श्रद्धाभङ्गोऽभिमानकृत् । कुतर्कश्चेतसो व्यक्तं भावशत्रुरनेकधा ॥ ८७ ॥

कुतर्केऽभिनिवेशस्तन्न युक्तो मुक्तिवादिनाम् । युक्तः पुनः श्रुते शीले समाधौ च महात्मनाम् ॥ ८८ ॥

बीजं चास्य परं सिद्धमवन्ध्यं सर्वयोगिनाम् । परार्थकरणं येन परिशुद्धमतोऽत्र च ॥ ८९ ॥

अविद्यासङ्गताः प्रायो विकल्पाः सर्व एव यत् । तद्योजनात्मकश्चैष कुतर्कः किमनेन तत् ॥ ९० ॥

[illegible] सामान्यनैव यावताम् । ते सर्वेऽपि तमापन्ना इति न्यायगतिः परा ॥ १०३ ॥ १

जातिप्रायश्च सर्वोऽय प्रतीतिफलबाधित । हस्ती व्यापादयत्युक्तौ प्राप्ताप्राप्तविकल्पवत् ॥ ९१ ॥

स्वभावोत्तरपर्यन्त एषोऽसावपि तत्त्वत । नार्वाग्दृग्गोचरो न्यायादन्यथान्येन कल्पित ॥ ९२ ॥

अतोऽग्नि क्लेदयत्यम्बुसन्निधौ दहतीति च । अम्ब्वग्निसन्निधौ तत्स्वाभाव्यादित्युदिते तयोः ॥ ९३ ॥

कोशपानादृते ज्ञानोपायो नास्त्यत्र युक्तित । विप्रकृष्टोऽप्ययस्कान्तः स्वार्थकृद्दृश्यते यतः ॥ ९४ ॥

दृष्टान्तमात्रं सर्वत्र यदेवं सुलभ क्षितौ । एतत्प्रधानस्तत्केन स्वनीत्यापोद्यते ह्ययम् ॥ ९५ ॥

द्विचन्द्रस्वप्नविज्ञाननिदर्शनबलोत्थित । निरालम्बनतां सर्वज्ञानानां साधयन्यथा ॥ ९६ ॥

सर्वं सर्वत्र चाप्नोति यदस्मादसमञ्जसम् । प्रतीतिबाधित लोके तदनेन न किंचन ॥ ९७ ॥

अतीन्द्रियार्थसिद्ध्यर्थं यथालोचितकारिणाम् । प्रयास शुष्कतर्कस्य न चासौ गोचर क्वचित् ॥ ९८ ॥

गोचरस्त्वागमस्यैव ततस्तदुपलब्धित । चन्द्रसूर्योपरागादिसंवाद्यागमदर्शनात् ॥ ९९ ॥

एतत्प्रधान सच्छ्राद्ध शीलवान् योगतत्पर । जानात्यतीन्द्रियानर्थांस्तथा चाह महामतिः ॥ १०० ॥

आगमेनानुमानेन योगाभ्यासरसेन च । त्रिधा प्रकल्पयन्प्रज्ञां लभते तत्त्वमुत्तमम् ॥ १०१ ॥

न तत्त्वतो भिन्नमताः सर्वज्ञा बहवो यतः । मोहस्तदविमुक्तीनां तद्भेदाश्रयणं ततः ॥ १०२ ॥

सर्वज्ञो नाम यः कश्चित्पारमार्थिक एव हिं । स एक एव सर्वत्र व्यक्तिभेदेऽपि तत्त्वतः ॥ १०३ ॥

×विशेषस्तु पुनस्तस्य कार्त्स्न्येनासर्वदर्शिभिः । सर्वैर्न ज्ञायते तेन तमापन्नो न कश्चन ॥ १०४ ॥

तस्मात्सामान्यतोऽप्येनमभ्युपैति य एव हि । निर्व्याजं तुल्य एवासौ तेनांशेनैव धीमताम् ॥ १०५ ॥

यथैवैकस्य नृपतेर्बहवोऽपि समाश्रिताः । दूरासन्नादिभेदेऽपि तद्भृत्याः सर्व एव ते ॥ १०६ ॥

सर्वज्ञतत्त्वाभेदेन तथा सर्वज्ञवादिनः । सर्वे तत्तत्त्वगा ज्ञेया भिन्नाचारस्थिता अपि ॥ १०७ ॥

न भेद एव तत्त्वेन सर्वज्ञानां महात्मनाम् । तथा नामादिभेदेऽपि भाव्यमेतन्महात्मभिः ॥ १०८ ॥

चित्राचित्रविभागेन यच्च देवेषु वर्णिता । भक्तिः सद्योगशास्त्रेषु ततोऽप्येवमिदं स्थितम् ॥ १०९ ॥

संसारिषु हि देवेषु भक्तिस्तत्कायगामिनाम् । तदतीते पुनस्तत्त्वे तदतीतार्थयायिनाम् ॥ ११० ॥

चित्रा चाद्येषु तद्रागतदन्यद्वेषसङ्गता । अचित्रा चरमे त्वेषा शमसाराखिलैव हि ॥ १११ ॥

संसारिणां हि देवानां यस्माच्चित्राण्यनेकधा । स्थित्यैश्वर्यप्रभावाद्यैः स्थानानि प्रतिशासनम् ॥ ११२ ॥

×प्रतिपत्तिस्ततस्तस्य सामान्येनैव यावताम् । ते सर्वेऽपि तमापन्ना इति न्यायगतिः परा ॥ १०३ ॥ १

तस्मात्तत्साधनोपायो नियमाच्चित्र एव हि । न भिन्ननगराणा स्यादेक वर्त्म कदाचन ॥ ११३ ॥
इष्टापूर्तानि कर्माणि लोके चित्राभिसन्धित । नानाफलानि सर्वाणि द्रष्टव्यानि विचक्षणैः ॥ ११४ ॥
ऋत्विग्भिर्मन्त्रसस्कारैर्ब्राह्मणानां समक्षत । अन्तर्वेद्यां हि यद्दत्तमिष्ट तदभिधीयते ॥ ११५ ॥
वापीकूपतडागानि देवतायतनानि च । अन्नप्रदानमेतत्तु पूर्तं तत्त्वविदो विदु ॥ ११६ ॥
अभिसधे फल भिन्नमनुष्ठाने समेऽपि हि । परमोऽत स एवेह वारीव कृषिकर्मणि ॥ ११७ ॥
रागादिभिरय चेह भिद्यतेऽनेकधा नृणाम् । नानाफलोपभोक्तॄणां तथाबुद्ध्यादिभेदत ॥ ११८ ॥
बुद्धिर्ज्ञानमसमोहस्त्रिविधो बोध इष्यते । तद्भेदात्सर्वकर्माणि भिद्यन्ते सर्वदेहिनाम् ॥ ११९ ॥
इन्द्रियार्थाश्रया बुद्धिर्ज्ञान त्वागमपूर्वकम् । सदनुष्ठानवच्चैतदसमोहोऽभिधीयते ॥ १२० ॥
रत्नोपलम्भतज्ज्ञानतत्प्राप्त्यादि यथाक्रमम् । इहोदाहरण साधु ज्ञेय बुद्ध्यादिसिद्धये ॥ १२१ ॥
आदर करणे प्रीतिरविघ्नः सम्पदागम । जिज्ञासा तज्ज्ञसेवा च सदनुष्ठानलक्षणम् ॥ १२२ ॥
बुद्धिपूर्वाणि कर्माणि सर्वाण्येवेह देहिनाम् । ससारफलदान्येव विपाकविरसत्वत ॥ १२३ ॥

ज्ञानपूर्वाणि तान्येव मुक्त्यङ्गं कुलयोगिनाम् । श्रुतशक्तिसमावेशादनुबन्धफलत्वतः ॥ १२४ ॥
असंमोहसमुत्थानि त्वेकान्तपरिशुद्धितः । निर्वाणफलदान्याशु भवातीतार्थयायिनाम् ॥ १२५ ॥
प्राकृतेष्विह भावेषु येषां चेतो निरुत्सुकम् । भवभोगविरक्तास्ते भवातीतार्थयायिनः ॥ १२६ ॥
एक एव तु मार्गोऽपि तेषां शमपरायणः । अवस्थाभेदभेदेऽपि जलधौ तीरमार्गवत् ॥ १२७ ॥
संसारातीततत्त्वं तु परं निर्वाणसंज्ञितम् । तद्ध्येकमेव नियमाच्छब्दभेदेऽपि तत्त्वतः ॥ १२८ ॥
सदाशिवः परं ब्रह्म सिद्धात्मा तथातेति च । शब्दैस्तदुच्यतेऽन्वर्थादेकमेवैवमादिभिः ॥ १२९ ॥
तल्लक्षणाविसंवादान्निराबाधमनामयम् । निष्क्रियं च परं तत्त्वं यतो जन्माद्ययोगतः ॥ १३० ॥
ज्ञाते निर्वाणतत्त्वेऽस्मिन्नसंमोहेन तत्त्वतः । प्रेक्षावतां न तद्भक्तौ विवाद उपपद्यते ॥ १३१ ॥
सर्वज्ञपूर्वकं चैतन्नियमादेव यत्स्थितम् । आसन्नोऽयमृजुर्मार्गस्तद्भेदस्तत्कथं भवेत् ॥ १३२ ॥
चित्रा तु देशनैतेषां स्याद्विनेयानुगुण्यतः । यस्मादेते महात्मानो भवव्याधिभिषग्वराः ॥ १३३ ॥

१ उपादाननिमित्ताभ्यामनभिसारित्वता ध्रुवा । सर्वकालं तथाभावात्तथातेत्यभिधीयते ॥ १ ॥ निःसंयोगातिभिका चेयं त्रिदुःखपरि-वर्जिता । भूतकोटिः परात्मन्तं भूतार्थफलदेति च ॥ २ ॥

यस्य येन प्रकारेण वीजाधानादिसम्भवः । सानुबन्धो भवत्येते तथा तस्य जगुस्तत ॥ १३४ ॥
एकापि देशनैतेषां यद्वा श्रोतृविभेदतः । अचिन्त्यपुण्यसामर्थ्यात्तथा चित्रावभासते ॥ १३५ ॥
यथाभव्य च सर्वेषामुपकारोऽपि तत्कृत । जायतेऽवन्ध्यताप्येवमस्या सर्वत्र सुस्थिता ॥ १३६ ॥
यद्वा तत्तन्नयापेक्षा तत्कालादिनियोगत । ऋषिभ्यो देशना चित्रा तन्मूलैषापि तत्त्वत ॥ १३७ ॥
तदभिप्रायमज्ञात्वा न ततोऽर्वाग्दृशां सताम् । युज्यते तत्प्रतिक्षेपो महानर्थकर परः ॥ १३८ ॥
निशानाथप्रतिक्षेपो यथान्धानामसङ्गत । तद्भेदपरिकल्पश्च तथैवार्वाग्दृशामयम् ॥ १३९ ॥
न युज्यते प्रतिक्षेप सामान्यस्यापि तत्सताम् । आर्यापवादस्तु पुनर्जिह्वाछेदाधिको मत ॥ १४० ॥
कुदृष्ट्यादिवन्नो सन्तो भाषन्ते प्रायश क्वचित् । निश्चित सारवच्चैव किन्तु सत्त्वार्थकृत्सदा ॥ १४१ ॥
निश्चयोऽतीन्द्रियार्थस्य योगिज्ञानादृते न च । अतोऽप्यत्रान्धकल्पानां विवादेन न किंचन ॥ १४२ ॥
न चानुमानविषय एषोऽर्थस्तत्त्वतो मत । न चातो निश्चय सम्यगन्यत्राप्याह धीधन ॥ १४३ ॥
यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभि । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ १४४ ॥

ज्ञायेरन्हेतुवादेन पदार्था यद्यतीन्द्रियाः । कालेनैतावता प्राज्ञैः कृतः स्यात्तेषु निश्चयः ॥ १४५ ॥

न चैतदेवं यत्तस्माच्छुष्कतर्कग्रहो महान् । मिथ्याभिमानहेतुत्वात्त्याज्य एव मुमुक्षुभिः ॥ १४६ ॥

ग्रहः सर्वत्र तत्त्वेन मुमुक्षूणामसङ्गतः । मुक्तौ धर्मा अपि प्रायस्त्यक्तव्याः किमनेन तत् ॥ १४७ ॥

तदत्र महतां वर्त्म समाश्रित्य विचक्षणैः । वर्तितव्यं यथान्यायं तदतिक्रमवर्जितैः ॥ १४८ ॥

परपीडेह सूक्ष्मापि वर्जनीया प्रयत्नतः । तद्वत्तदुपकारेऽपि यतितव्यं सदैव हि ॥ १४९ ॥

गुरवो देवता विप्रा यतयश्च तपोधनाः । पूजनीया महात्मानः सुप्रयत्नेन चेतसा ॥ १५० ॥

पापवत्स्वपि चात्यन्तं स्वकर्मनिहतेष्वलम् । अनुकम्पैव सत्त्वेषु न्याय्या धर्मोऽयमुत्तमः ॥ १५१ ॥

कृतमत्र प्रसङ्गेन प्रकृतं प्रस्तुमोऽधुना । तत्पुनः पञ्चमी तावद्योगदृष्टिर्महोदया ॥ १५२ ॥

स्थिरायां दर्शनं नित्यं प्रत्याहारवदेव च । कृत्यमभ्रान्तमनघं सूक्ष्मबोधसमन्वितम् ॥ १५३ ॥

बालधूलीगृहक्रीडातुल्यास्यां भाति धीमताम् । तमोग्रन्थिविभेदेन भवचेष्टाखिलैव हि ॥ १५४ ॥

मायामरीचिगन्धर्वनगरस्वप्नसंनिभान् । बाह्यान् पश्यति तत्त्वेन भावान् श्रुतविवेकतः ॥ १५५ ॥

अनाद्य केवल ज्योतिर्निराबाधमनामयम् । यदत्र तत्पर तत्त्व शेष पुनरुपप्लव ॥ १५६ ॥
एवं विवेकिनो धीरा प्रत्याहारपरास्तथा । धर्मबाधापरित्यागयत्नवन्तश्च तत्त्वत ॥ १५७ ॥
न धर्मलक्ष्मीसख्यी लक्ष्मीर्यथानन्दाय धीमताम् । तथा पापसखा लोके देहिनां भोगविस्तर ॥ १५८ ॥
धर्मादपि भवन् भोग प्रायोऽनर्थाय देहिनाम् । चन्दनादपि सम्भूतो दहत्येव हुताशन ॥ १५९ ॥
भोगात्तदिच्छाविरतिः स्कन्धभारापनुत्तये । स्कन्धान्तरसमारोपस्तत्संस्कारविधानत ॥ १६० ॥
कान्तायामेतदन्येषा प्रीतये धारणा परा । अतोऽत्र नान्यमुद्दिश्य मीमांसास्ति हितोदया ॥ १६१ ॥
अस्यां तु धर्ममाहात्म्यात्समाचारविशुद्धित । प्रियो भवति भूतानां धर्मैकामसनास्तया ॥ १६२ ॥
श्रुतधर्मे मनो नित्य कायस्तस्यान्यचेष्टिते । अतस्त्वाक्षेपकज्ञानाम्न भोगा भवहेतव ॥ १६३ ॥

---

१ अपरैरप्यस्यां स्थिरायां दशवमी गुणाः प्रोक्ता ॥ अलौल्यमारोग्यमनिष्ठुरत्व, गन्धः शुभो मूत्रपुरीषमल्पम् ॥ कान्तिः प्रसादः स्वरसौम्यता च, योगप्रवृत्तेः प्रथम हि चिह्नम् ॥१॥ मैत्र्यादियुक्त विषयेष्वचेतः, प्रभाववद्धैर्यसमन्वित च ॥ द्वन्द्वैरधृष्यत्वमभीष्टलाभः, जनप्रियत्वं च तथा परं स्यात् ॥ २ ॥ दोषव्यपायः परमा च तृप्तिरौचित्ययोगः समता च गुर्वी ॥ वैरादिनाशोऽथ ऋतम्भरा धी-र्निष्पन्नयोगस्य तु चिह्नमेतत् ॥ ३ ॥

मायाम्भस्तत्त्वतः पश्यन्ननुद्विग्नस्ततो द्रुतम् । तन्मध्येन प्रयात्येव यथा व्याघातवर्जितः ॥ १६४ ॥
भोगान्स्वरूपतः पश्यंस्तथा मायोदकोपमान् । भुञ्जानोऽपि ह्यसङ्गः सन् प्रयात्येव परं पदम् ॥ १६५ ॥
भोगतत्त्वस्य तु पुनर्न भवोदधिलङ्घनम् । मायोदकदृढावेशस्तेन यातीह कः पथा ॥ १६६ ॥
स तत्रैव भवोद्विग्नो यथा तिष्ठत्यसंशयम् । मोक्षमार्गेऽपि हि तथा भोगजम्बालमोहितः ॥ १६७ ॥
मीमांसाभावतो नित्यं न मोहोऽस्यां यतो भवेत् । अतस्तत्त्वसमावेशात्सदैव हि हितोदयः ॥ १६८ ॥
ध्यानप्रियाप्रभावेन (प्रभा प्रायो) नास्यां रुगत एव हि । तत्त्वप्रतिपत्तियुता विशेषेण शमान्विता ॥१६९॥
ध्यानजं सुखमस्यां तु जितमन्मथसाधनम् । विवेकबलनिर्जातं शमसारं सदैव हि ॥ १७० ॥
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् । एतदुक्त समासेन लक्षणं सुखदुःखयोः ॥ १७१ ॥
पुण्यापेक्षमपि ह्येवं सुखं परवशं स्थितम् । ततश्च दुःखमेवैतत्तल्लक्षणानियोगतः ॥ १७२ ॥
ध्यानं च निर्मले बोधे सदैव हि महात्मनाम् । क्षीणप्रायमलं हेम सदा कल्याणमेव हि ॥ १७३ ॥
सत्प्रवृत्तिपदं चेहासङ्गानुष्ठानसंज्ञितम् । महापथप्रयाणं यदनागामिपदावहम् ॥ १७४ ॥

प्रशान्तवाहितासज्ञ विसभागपरिक्षयः । शिववर्त्म ध्रुवाध्वेति योगिभिर्गीयते ह्यद ॥ १७५ ॥

एतत्प्रसाधयत्याशु यद्योग्यस्यां व्यवस्थित । एतत्पदावहैव तत्त्वैतद्विदां मता ॥ १७६ ॥

समाधिनिष्ठा तु परा तदासङ्गविवर्जिता । सात्मीकृतप्रवृत्तिश्च तदुत्तीर्णाशयेति च ॥ १७७ ॥

निराचारपदो ह्यस्यामतिचारविवर्जित । आरूढारोहणाभावगतिवत्त्वस्य चेष्टितम् ॥ १७८ ॥

रत्नादिशिक्षादृग्भ्योऽन्या यथा दृक्तन्नियोजने । तथाचारक्रियाप्यस्य सैवान्या फलभेदत ॥ १७९ ॥

तन्नियोगान्महात्मेह कृतकृत्यो यथा भवेत् । तथाय धर्मसन्यासविनियोगान्महामुनि ॥ १८० ॥

द्वितीयाऽपूर्वकरणे मुख्योऽयमुपजायते । केवलश्रीस्ततश्चास्य नि सपत्ना सदोदया ॥ १८१ ॥

स्थित शीतांशुवज्जीव प्रकृत्या भावशुद्धया । चन्द्रिकावच्च विज्ञान तदावरणमभ्रवत् ॥ १८२ ॥

घातिकर्माभ्रकल्प तदुक्तयोगानिलाहते । यदापैति तदा श्रीमान् जायते ज्ञानकेवली ॥ १८३ ॥

क्षीणदोषोऽथ सर्वज्ञ सर्वलब्धिफलान्वित । पर परार्थं सपाद्य ततो योगान्तमश्नुते ॥ १८४ ॥

तत्र द्रागेव भगवानयोगाद्योगसत्तमात् । भवव्याधिक्षय कृत्वा निर्वाण लभते परम् ॥ १८५ ॥

व्याधिमुक्तः पुमान् लोके यादृशस्तादृशो ह्ययम् । नाभावो न च नो मुक्तो व्याधिनाव्याधितो न च ॥ १८७ ॥
भव एव महाव्याधिर्जन्ममृत्युविकारवान् । विचित्रमोहजननस्तीव्ररागादिवेदनः ॥ १८८ ॥
मुख्योऽयमात्मनोऽनादिचित्रकर्मनिदानजः । तथानुभवसिद्धत्वात्सर्वप्राणभृतामिति ॥ १८९ ॥
एतन्मुक्तश्च मुक्तोऽपि मुख्य एवोपपद्यते । जन्मादिदोषविगमात्तददोषत्वसङ्गतेः ॥ १९० ॥
तत्स्वभावोपमर्देऽपि तत्तत्स्वाभाव्ययोगतः । तस्यैव हि तथाभावात्तददोषत्वसङ्गतिः ॥ १९१ ॥
स्वभावोऽस्य स्वभावो यन्निजा सत्तैव तत्त्वतः । भावावधिरयं युक्तो नान्यथातिप्रसङ्गतः ॥ १९२ ॥
अनन्तरक्षणाभूतिरात्मभूतेह यस्य तु । तयाऽविरोधान्नित्योऽसौ स्यादसन्वा सदैव हि ॥ १९३ ॥
स एव न भवत्येतदन्यथाभवतीतिवित् । विरुद्धं तन्नयादेव तदुत्पत्त्यादितस्तथा ॥ १९४ ॥
सतोऽसत्त्वे तदुत्पादस्ततो नाशोऽपि तस्य यत् । तन्नष्टस्य पुनर्भावः सदा नाशे न तत्स्थितिः ॥ १९५ ॥
स क्षणस्थितिधर्मा चेद् द्वितीयादिक्षणे स्थितौ । युज्यते ह्येतदप्यस्य तथा चोक्तानतिक्रमः ॥ १९६ ॥
क्षणस्थितौ तदैवास्य नास्थितिर्युक्त्यसङ्गतेः । न पश्चादपि सेत्येवं सतोऽसत्त्वं व्यवस्थितम् ॥ १९७ ॥

भवभावानिवृत्तावप्ययुक्ता मुक्तकल्पना । एकान्तैकस्वभावस्य न ह्यवस्थाद्वय क्वचित् ॥ १९७ ॥
तद्भावे च ससारी मुक्तश्चेति निरर्थकम् । तत्स्वभावोपमर्दोऽस्य नीत्या तात्त्विक इष्यताम् ॥ १९८ ॥
दिदृक्षाद्यभिसमभूतं तन्मुख्यमस्या निवर्तते । प्रधानादिनतेर्हेतुस्तदभावान्न तन्नतिः ॥ १९९ ॥
अन्यथा स्यादिय नित्यमेषा च भव उच्यते । एव च भवनित्यत्वे कथ मुक्तस्य सम्भवः ॥ २०० ॥
अवस्था तत्त्वतो नो चेन्ननु तत्प्रत्यय कथम् । भ्रान्तोऽय किमनेनेति मानमत्र न विद्यते ॥ २०१ ॥
योगिज्ञान तु मान चेत्तदवस्थान्तर तु तत् । तत किं भ्रान्तमेतत्स्यादन्यथा सिद्धसाध्यता ॥ २०२ ॥
व्याधितस्तदभावो वा तदन्यो वा यथैव हि । व्याधिमुक्तो न सन्नीत्या कदाचिदुपपद्यते ॥ २०३ ॥
ससारी तदभावो वा तदन्यो वा तथैव हि । मुक्तोऽपि हन्त नो मुक्तो मुख्यवृत्त्येति तद्विद ॥ २०४ ॥
क्षीणव्याधिर्यथा लोके व्याधिमुक्त इति स्थित । भवरोग्येव तु तथा मुक्तस्तन्त्रेषु तत्क्षयात् ॥ २०५ ॥
अनेकयोगशास्त्रेभ्यः सङ्क्षेपेण समुद्धृत । दृष्टिभेदेन योगोऽयमात्मानुस्मृतये पर ॥ २०६ ॥
कुलादियोगभेदेन चतुर्धा योगिनो यतः । अतः परोपकारोऽपि लेशतो न विरुध्यते ॥ २०७ ॥

कुलप्रवृत्तचक्रा ये त एवास्याधिकारिणः । योगिनो न तु सर्वेऽपि तथा सिद्धादिभावतः ॥ २०८ ॥
ये योगिनां कुले जातास्तद्धर्मानुगताश्च ये । कुलयोगिन उच्यन्ते गोत्रवन्तोऽपि नापरे ॥ २०९ ॥
सर्वत्राद्वेषिणश्चैते गुरुदेवद्विजप्रियाः । दयालवो विनीताश्च बोधवन्तो यतेन्द्रियाः ॥ २१० ॥
प्रवृत्तचक्रास्तु पुनर्यमद्वयसमाश्रयाः । शेषद्वयार्थिनोऽत्यन्तं शुश्रूषादिगुणान्विताः ॥ २११ ॥
आद्यावञ्चकयोगाप्त्या तदन्यद्वयलाभिनः । एतेऽधिकारिणो योगप्रयोगस्येति तद्विदः ॥ २१२ ॥
इहाहिंसादयः पञ्च सुप्रसिद्धा यमाः सताम् । अपरिग्रहपर्यन्तास्तथेच्छादिचतुर्विधाः ॥ २१३ ॥
तद्वत्कथाप्रीतियुता तथाविपरिणामिनी । यमेष्विच्छावसेयेह प्रथमो यम एव तु ॥ २१४ ॥
सर्वत्र शमसारं तु यमपालनमेव यत् । प्रवृत्तिरिह विज्ञेया द्वितीयो यम एव तत् ॥ २१५ ॥
विपक्षाचिन्तारहितं यमपालनमेव यत् । तत्स्थैर्यमिह विज्ञेयं तृतीयो यम एव हि ॥ २१६ ॥
परार्थसाधकं त्वेतत्सिद्धिः शुद्धान्तरात्मनः । अचिन्त्यशक्तियोगेन चतुर्थो यम एव तु ॥ २१७ ॥
सद्भिः कल्याणसम्पन्नैर्दर्शनादपि पावनैः । तथादर्शनतो योग आद्यावञ्चक उच्यते ॥ २१८ ॥

तेषामेव प्रणामादिक्रियानियम इत्यलम् । क्रियावञ्चकयोग स्यान्महापापक्षयोदय ॥ २१९ ॥
फलावञ्चकयोगस्तु सद्भ्य एव नियोगत । सानुबन्धफलावाप्तिर्धर्मसिद्धौ सतां मता ॥ २२० ॥
कुलादियोगिनामस्मान्मत्तोऽपि जडधीमताम् । श्रवणात्पक्षपातादेरुपकारोऽस्ति लेशतः ॥ २२१ ॥
तात्त्विक पक्षपातश्च भावशून्या च या क्रिया । अनयोरन्तर ज्ञेय भानुखद्योतयोरिव ॥ २२२ ॥
खद्योतकस्य यत्तेजस्तदल्प च विनाशि च । विपरीतमिद भानोरिति भाव्यमिद बुधैः ॥ २२३ ॥
श्रवणे प्रार्थनीया स्युर्न हि योग्या कदाचन । यत्न कल्याणसत्त्वाना महारत्ने स्थितो यत ॥ २२४ ॥
नैतद्विदस्त्वयोग्येभ्यो ददत्येन तथापि तु । हरिभद्र इद प्राह नैतेभ्यो देय आदरात् ॥ २२५ ॥
अवज्ञेह कृताल्पापि यदनर्थाय जायते । अतस्तत्परिहारार्थं न पुनर्भावदोषत ॥ २२६ ॥
योग्येभ्यस्तु प्रयत्नेन देयोऽय विधिनान्विते । मात्सर्यविरहेणोच्चै श्रेयोविघ्नप्रशान्तये ॥ २२७ ॥

॥ योगदृष्टिसमुच्चयः समाप्तः ॥

# ॥ अथ योगबिन्दुः ॥

नत्वाद्यन्तविनिर्मुक्तं शिवं योगीन्द्रवन्दितम् । योगबिन्दुं प्रवक्ष्यामि तत्त्वसिद्ध्यै महोदयम् ॥ १ ॥

सर्वेषां योगशास्त्राणामविरोधेन तत्त्वतः । सन्नीत्या स्थापकं चैव मध्यस्थांस्तद्विदः प्रति ॥ २ ॥

मोक्षहेतुर्यतो योगो भिद्यते न ततः क्वचित् । साध्याभेदात्तथाभावे तूक्तिभेदो न कारणम् ॥ ३ ॥

मोक्षहेतुत्वमेवास्य किन्तु यत्नेन धीधनैः । सद्गोचरादिसंशुद्धं मृग्यं स्वहितकाङ्क्षिभिः ॥ ४ ॥

गोचरश्च स्वरूपं च फलं च यदि युज्यते । अस्य योगस्ततोऽयं यन्मुख्यशब्दार्थयोगतः ॥ ५ ॥

आत्मा तदन्यसंयोगात्संसारी तद्वियोगतः । स एव मुक्त एतौ च तत्स्वाभाव्यात्तयोस्तथा ॥ ६ ॥

अन्यतोऽनुग्रहोऽप्यत्र तत्स्वाभाव्यनिबन्धनः । अतोऽन्यथा त्वदः सर्वं न मुख्यमुपपद्यते ॥ ७ ॥

केवलस्यात्मनो न्यायात्सदात्मत्वाविशेषतः । संसारी मुक्त इत्येतद्द्वितयं कल्पनैव हि ॥ ८ ॥

काञ्चनत्वाविशेषेऽपि यथा सत्काञ्चनस्य न । शुद्ध्यशुद्धी ऋते शब्दात्तद्वदत्राप्यसंशयम् ॥ ९ ॥

योग्यतामन्तरेणास्य सयोगोऽपि न युज्यते। सा च तत्त्वमित्येव तत्सयोगोऽप्यनादिमान् ॥ १० ॥
योग्यतायास्तथात्वेनविरोधोऽस्यान्यथा पुन । अतीतकालसाधर्म्यात्किन्त्वाक्षातोऽयमीदृशः ॥ ११ ॥
अनुग्रहोऽप्यनुग्राह्ययोग्यतापेक्ष एव तु । नाणु कदाचिदात्मा स्याद्देवतानुग्रहादपि ॥ १२ ॥
कर्मणो योग्यतायां हि कर्ता तद्व्यपदेशभाक् । नान्यथातिप्रसङ्गेन लोकसिद्धमिद ननु ॥ १३ ॥
अन्यथा सर्वमेवैतदौपचारिकमेव हि । प्रामोत्यशोभन चैतत्तत्त्वतस्तदभावत ॥ १४ ॥
उपचारोऽपि च प्रायो लोके यन्मुख्यपूर्वकः। दृष्टस्ततोऽप्यद सर्वमित्यमेव व्यवस्थितम् ॥ १५ ॥
ऐदम्पर्यं तु विज्ञेय सर्वस्यैवास्य भावत । एव व्यवस्थिते तत्त्वे योगमार्गस्य सम्भव ॥ १६ ॥
पुरुप क्षेत्रविज्ञानमिति नाम यदात्मन । अविद्या प्रकृतिः कर्म तदन्यस्य तु भेदत ॥ १७ ॥
भ्रान्तिप्रवृत्तिबन्धास्तु सयोगस्येति कीर्तितम् । शास्ता वन्ध्योऽविकारी च तथानुग्राहकस्य तु ॥ १८ ॥
साकल्यस्यास्य विज्ञेया परिपाकादिभावतः। औचित्याबाधया सम्यग्योगसिद्धिस्तथा तथा ॥ १९ ॥
एकान्ते सति तद्यत्नस्तथासति च यद्वृथा । तत्तथायोग्यताया तु तन्नाशेनेष सार्थक ॥ २० ॥

॥ २१ ॥

दैवं पुरुषकारश्च तुल्यावेतदपि स्फुटम् । युज्येते एवमेवेति वक्ष्याम्यूर्ध्वमदोऽपि हि ॥ २२ ॥

लोकशास्त्राविरोधेन यद्योगो योग्यतां व्रजेत् । श्रद्धामात्रैकगम्यस्तु हन्त नेष्टो विपश्चिताम् ॥ २३ ॥

वचनादस्य संसिद्धिरेतदप्येवमेव हि । दृष्टेष्टाबाधितं तस्मादेतन्मृग्यं हितैषिणा ॥ २४ ॥

दृष्टबाधैव यत्रास्ति ततोऽदृष्टप्रवर्तनम् । असच्छ्रद्धाभिभूतानां केवलं बाध्यसूचकम् ॥ २५ ॥

प्रत्यक्षेणानुमानेन यदुक्तोऽर्थो न बाध्यते । दृष्टेऽदृष्टेऽपि युक्ता स्यात्प्रवृत्तिस्तत एव तु ॥ २६ ॥

अतोऽन्यथाप्रवृत्तौ तु स्यात्साधुत्वाद्यनिश्चितम् । वस्तुतत्त्वस्य हन्तैवं सर्वमेवासमञ्जसम् ॥ २७ ॥

तद्दृष्टाद्यनुसारेण वस्तुतत्त्वव्यपेक्षया । तथातथोक्तिभेदेऽपि साध्वी तत्त्वव्यवस्थितिः ॥ २८ ॥

अमुख्यविषयो यः स्यादुक्तिभेदः स बाधकः । हिंसाऽहिंसादिवद्यद्वा तत्त्वभेदव्यपाश्रयः ॥ २९ ॥

मुख्ये तु तत्र नैवासौ बाधकः स्याद्विपश्चिताम् । हिंसादिविरतावर्थे यमव्रतगतो यथा ॥ ३० ॥

मुख्यतत्त्वानुवेधेन स्पष्टलिङ्गान्वितस्ततः । युक्तागमानुसारेण योगमार्गोऽभिधीयते ॥ ३१ ॥

अध्यात्मं भावना ध्यानं समता वृत्तिसङ्क्षयः । मोक्षेण योजनाद्योग एष श्रेष्ठो यथोत्तरम् ॥ ३१ ॥

तात्त्विकोऽतात्त्विकश्चाय सानुबन्धस्तथाऽपर । सास्रवोऽनास्रवश्चेति सञ्ज्ञाभेदेन कीर्तित ॥ ३२ ॥
तात्त्विको भूत एव स्यादन्यो लोकव्यपेक्षया। अच्छिन्न सानुबन्धस्तु छेदवानपरो मत ॥ ३३ ॥
सास्रवो दीर्घससारस्ततोऽन्योऽनास्रवः परः। अवस्थाभेदविषया सज्ञा एता यथोदिता ॥ ३४ ॥
स्वरूप सम्भव चैव वक्ष्याम्यूर्ध्वमनुक्रमात्। अमीषां योगभेदानां सम्यक् शास्त्रानुसारत ॥ ३५ ॥
इदानीं तु समासेन योगमाहात्म्यमुच्यते। पूर्वसेवाक्रमश्चैव प्रवृत्त्यङ्गतया सताम् ॥ ३६ ॥
योग कल्पतरुः श्रेष्ठो योगश्चिन्तामणि परः। योगः प्रधान धर्माणां योग सिद्धे स्वयग्रह ॥ ३७ ॥
तथा च जन्मबीजाग्निर्जरसोऽपि जरा परा। दु खानां राजयक्ष्माय मृत्योर्मृत्युरुदाहृत ॥ ३८ ॥
कुण्ठीभवन्ति तीक्ष्णानि मन्मथास्त्राणि सर्वथा। योगवर्मावृते चित्ते तपश्छिद्रकराण्यपि ॥ ३९ ॥
अक्षरद्वयमप्येतच्छ्रूयमाण विधानत । गीत पापक्षयायोच्चैर्योगसिद्धैर्महात्मभि ॥ ४० ॥
मलिनस्य यथा हेम्नो वह्नेः शुद्धिर्नियोगत । योगाग्नेश्चेतसस्तद्वदविद्यामलिनात्मन ॥ ४१ ॥
अमुत्र सशयापन्नचेतसोऽपि यतो ध्रुवम्। सत्स्वप्नप्रत्ययादिभ्य सशयो विनिवर्तते ॥ ४२ ॥

श्रद्धालेशान्नियोगेन बाह्ययोगवतोऽपि हि । शुक्लस्वप्ना भवन्तीष्टदेवतादर्शनादयः ॥ ४३ ॥
देवान्गुरून्द्विजान्साधून्सत्कर्मस्था हि योगिनः । प्रायः स्वप्ने प्रपश्यन्ति हृष्टान्सन्नोदनापरान् ॥ ४४ ॥
नोदनापि च सा यतो (स्माद्) यथार्थैवोपजायते । तथाकालादिभेदेन हन्त नोपप्लवस्ततः ॥ ४५ ॥
स्वप्नमन्त्रप्रयोगाच्च सत्यस्वप्नोऽभिजायते । विद्वज्जनेऽविगानेन सुप्रसिद्धमिदं तथा ॥ ४६ ॥
न ह्येतद्भूतमात्रत्वानिमित्तं सङ्गतं वचः । अयोगिनः समध्यक्षं यन्नैवंविधगोचरम् ॥ ४७ ॥
प्रलापमात्रं च वचो यदप्रत्यक्षपूर्वकम् । यथेहाप्सरसः स्वर्गे मोक्षे चानन्द उत्तमः ॥ ४८ ॥
योगिनो यत्समध्यक्षं ततश्चेदुक्तनिश्चयः । आत्मादेरपि युक्तोऽयं तत एवेति चिन्त्यताम् ॥ ४९ ॥
अयोगिनो हि प्रत्यक्षगोचरातीतमप्यलम् । विजानात्येतदेवं च बाधात्रापि न विद्यते ॥ ५० ॥
आत्माद्यतीन्द्रियं वस्तु योगिप्रत्यक्षभावतः । परोक्षमपि चान्येषां न हि युक्त्या न युज्यते ॥ ५१ ॥
किं चान्यद्योगतः स्थैर्यं धैर्यं श्रद्धा च जायते । मैत्री जनप्रियत्वं च प्रातिभं तत्त्वभासनम् ॥ ५२ ॥
विनिवृत्ताग्रहत्वं च तथा द्वन्द्वसहिष्णुता । तदभावश्च लाभश्च बाह्यानां कालसङ्गतः ॥ ५३ ॥

धृतिः क्षमा सदाचारो योगवृद्धि शुभोदया । आदेयता गुरुत्व च शमसौख्यमनुत्तरम् ॥ ५४ ॥
आविद्वदङ्गनासिद्धमिदानीमपि दृश्यते । एतत्प्रायस्तदन्यत्तु सुवह्वागमभाषितम् ॥ ५५ ॥
न चैतद्भूतसङ्घातमात्रादेवोपपद्यते । तदन्यभेदकाभावे तद्वैचित्र्याप्रसिद्धित ॥ ५६ ॥
ब्रह्मचर्येण तपसा सद्वेदाध्ययनेन च । विद्यामन्त्रविशेषेण सत्तीर्थासेवनेन च ॥ ५७ ॥
पित्रो सम्यगुपस्थानात् ग्लानभैषज्यदानतः । देवादिशोधनाच्चैव भवेज्जातिस्मर पुमान् ॥ ५८ ॥
अत एव न सर्वेषामेतदागमनेऽपि हि । परलोकाद्यथैकस्मात्स्थानात्तनुभृतामिति ॥ ५९ ॥
न चैतेषामपि ह्येतदुन्मादग्रहयोगत । सर्वेषामनुभूतार्थस्मरण स्याद्विशेषत ॥ ६० ॥
सामान्येन तु सर्वेषां स्तनवृत्त्यादिचिह्नितम् । अभ्यासातिशयात्स्वप्नवृत्तितुल्य व्यवस्थितम् ॥ ६१ ॥
स्वप्ने वृत्तिस्तथाभ्यासाद्विशिष्टस्मृतिवर्जिता । जाग्रतोऽपि क्वचित्सिद्धा सूक्ष्मबुद्ध्या निरूप्यताम् ॥६२॥
श्रूयन्ते च महात्मान एते दृश्यन्त इत्यपि । क्वचित्संवादिनस्तस्मादात्मादेर्हन्त निश्चय ॥ ६३ ॥
एव च तत्त्वसंसिद्धेर्योग एव निबन्धनम् । अतो यन्निश्चितैवेय नान्यतस्त्वीदृशी क्वचित् ॥ ६४ ॥

अतोऽत्रैव महान्यत्नस्तत्तत्त्वप्रसिद्धये । प्रेक्षावता सदा कार्यो वादग्रन्थास्त्वकारणम् ॥ ६५ ॥

उक्तं च योगमार्गज्ञैस्तपोनिर्धूतकल्मषैः । भावियोगिहितायोच्चैर्मोहदीपसमं वचः ॥ ६६ ॥

वादांश्च प्रतिवादांश्च वदन्तो निश्चितांस्तथा । तत्त्वान्तं नैव गच्छन्ति तिलपीलकवद्गतौ ॥ ६७ ॥

अध्यात्ममत्र परम उपायः परिकीर्तितः । गतौ सन्मार्गगमनं यथैव ह्यप्रमादिनः ॥ ६८ ॥

मुक्त्वातो वादसङ्घट्टमध्यात्ममनुचिन्त्यताम् । नाविधूते तमस्कन्धे ज्ञेये ज्ञानं प्रवर्तते ॥ ६९ ॥

सदुपायाद्यथैवाप्तिरुपेयस्य तथैव हि । नेतरस्मादिति प्राज्ञः सदुपायपरो भवेत् ॥ ७० ॥

सदुपायश्च नाध्यात्मादन्यः सन्दर्शितो बुधैः । दुरापं किन्त्वदोऽपीह भवाब्धौ सुष्ठु देहिनाम् ॥ ७१ ॥

चरमे पुद्गलावर्ते यतो यः शुक्लपाक्षिकः[1] । भिन्नग्रन्थिश्चरित्री च तस्यैवैतदुदाहृतम् ॥ ७२ ॥

प्रदीर्घभवसद्भावान्मालिन्यातिशयात्तथा । अतत्त्वाभिनिवेशाच्च नान्येष्वन्यस्य जातुचित् ॥ ७३ ॥

अनादिरेष संसारो नानागतिसमाश्रयः । पुद्गलानां परावर्ता अत्रानन्तास्तथा गताः ॥ ७४ ॥

---

१ जेसिमवड्ढो पोग्गलपरियट्टो सेसओ उ संसारो । ते सुक्कपक्खिआ खलु अहिगे पुण किण्हपक्खिआ ॥ १ ॥

सर्वेषामेव सत्त्वाना तत्स्वाभाव्यनियोगतः । नान्यथा साविदेतेषा सूक्ष्मबुद्धया विभाव्यताम् ॥ ७५ ॥
याद्दच्छिक न यत्कार्यं कदाचिज्जायते क्वचित्। सत्त्वपुद्गलयोगश्च तथा कार्यमिति स्थितम् ॥ ७६ ॥
निग्रस्यास्य तथा भावे तत्स्वाभाव्यादृते पर । न कश्चिद्धेतुरेव च तदेव हि तथेष्यताम् ॥ ७७ ॥
स्वभाववादापत्तिश्चेदत्र को दोष उच्यताम् । तदन्यवादाभावश्चेत्स तदन्यानपोहनात् ॥ ७८ ॥
कालादिसचिवश्चायमिष्ट एव महात्मभि । सर्वत्र व्यापकत्वेन न च युक्त्या न युज्यते ॥ ७९ ॥
तथात्मपरिणामात्तु कर्मबन्धस्ततोऽपि च । तथा दुःखादि कालेन तत्स्वभावादृते कथम् ॥ ८० ॥
वृथा कालादिवादश्चेन्न तद्बीजस्य भावत । अकिञ्चित्करमेतच्चेन्न स्वभावोपयोगत ॥ ८१ ॥
सामग्र्या कार्यहेतुत्व तदन्याभावतोऽपि हि। तदभावादिति ज्ञेय कालादीनां नियोगत ॥ ८२ ॥
एतच्चान्यत्र महता प्रपञ्चेन निरूपितम् । नेह प्रतन्यतेऽत्यन्त लेशतस्तूक्तमेव हि ॥ ८३ ॥
कृतमत्र प्रसङ्गेन प्रकृत प्रस्तुमोऽधुना । नाध्यात्म योगभेदत्वादावर्तेष्वपरेष्वपि ॥ ८४ ॥
तीव्रपापाभिभूतत्वाज्ज्ञानलोचनवर्जिताः । सद्वर्त्मावतरन्त्येषु न सत्त्वा गहनान्धवत् ॥ ८५ ॥

भवाभिनन्दिनः प्रायस्त्रिसंज्ञा एव दुःखिताः । केचिद्धर्मकृतोऽपि स्युर्लोकपक्तिकृतादराः ॥ ८६ ॥
क्षुद्रो लाभरतिर्दीनो मत्सरी भयवान् शठः । अज्ञो भवाभिनन्दी स्यान्निष्फलारम्भसङ्गतः ॥ ८७ ॥
लोकाराधनहेतोर्या मलिनेनान्तरात्मना । क्रियते सत्क्रिया सात्र लोकपक्तिरुदाहृता ॥ ८८ ॥
भवाभिनन्दिनो लोकपक्त्या धर्मक्रियामपि । महतो हीनदृष्ट्योच्चैर्दुरन्तां तद्विदो विदुः ॥ ८९ ॥
धर्मार्थं लोकपक्तिः स्यात्कल्याणाङ्गं महामतेः । तदर्थं तु पुनर्धर्मः पापायाल्पधियामलम् ॥ ९० ॥
लोकपक्तिमतः प्राहुरनाभोगवतो वरम् । धर्मक्रियां न महतो हीनतात्र यतस्तथा ॥ ९१ ॥
तत्त्वेन तु पुनर्नैकाप्यत्र धर्मक्रिया मता । तत्प्रवृत्त्यादिवैगुण्याल्लोभक्रोधक्रिया यथा ॥ ९२ ॥
तस्मादचरमावर्तेष्वध्यात्मं नैव युज्यते । कायस्थितितरोर्यद्वत्तज्जन्मस्वामरं सुखम् ॥ ९३ ॥
तैजसानां च जीवानां भव्यानामपि नो तदा । यथा चारित्रमित्येवं नान्यदा योगसम्भवः ॥ ९४ ॥
तृणादीनां च भावानां योग्यानामपि नो यथा । तदा घृतादिभावः स्यात्तद्वद्योगोऽपि नान्यदा ॥ ९५ ॥

---

१ असारोप्येप संसारः सारवानिव वक्ष्यते । दधिदुग्धाम्बुताम्बूलपण्यपण्याङ्गनादिभिः ॥ १ ॥

नवनीतादिकल्पस्तत्तन्नावेऽत्र निबन्धनम । पुद्गलानां परावर्तश्चरमो न्यायसङ्गतम् ॥ ९६ ॥
अत एवेह निर्दिष्टा पूर्वसेवापि या परै । सासन्नान्यगता मन्ये भवाभिष्वङ्गभावत ॥ ९७ ॥
अपुनर्बन्धकादीनां भवाब्धौ चलितात्मनाम् । नासौ तथाविधा युक्ता वक्ष्यामो युक्तिमत्र तु ॥ ९८ ॥
मुक्तिमार्गपर युक्त्या युज्यते विमल मनः । सद्बुद्ध्यासन्नभावेन यदमीषां महात्मनाम् ॥ ९९ ॥
तथा चान्यैरपि ह्येतद्योगमार्गकृतश्रमै । सङ्गीतमुक्तिभेदेन यद्गोपेन्द्रमिद वच । ॥ १०० ॥
अनिवृत्ताधिकारायां प्रकृतौ सर्वथैव हि । न पुंसस्तत्त्वमार्गेऽस्मिञ्जिज्ञासापि प्रवर्तते ॥ १०१ ॥
क्षेत्ररोगाभिभूतस्य यथात्यन्त विपर्यय । तद्वदेवास्य विज्ञेयस्तदावर्तनियोगत ॥ १०२ ॥
जिज्ञासायामपि ह्यत्र कश्चित्सर्गो निवर्तते । नाक्षीणपाप एकान्तादाप्नोति कुशलां धियम् ॥ १०३ ॥
ततस्तदात्वे कल्याणमायत्यां तु विशेषत । मन्त्राद्यपि सदा चारु सर्वावस्थाहित मतम् ॥ १०४ ॥
उभयोस्तत्स्वभावत्वात्तदावर्तनियोगतः । युज्यते सर्वमेवैतन्नान्यथेति मनीषिण ॥ १०५ ॥
अत्राप्येतद्विचित्राया प्रकृतेर्युज्यते परम् । इत्थमावर्तभेदेन यदि सम्यग्निरूप्यते ॥ १०६ ॥

अन्यथैकस्वभावत्वादधिकारनिवृत्तितः । एकस्य सर्वतद्भावो बलादापद्यते सदा ॥ १०७ ॥
तुल्य एव तथा सर्गः सर्वेषां सम्प्रसज्यते । ब्रह्मादिस्तम्बपर्यन्त एवं मुक्तिः ससाधना ॥ १०८ ॥
पूर्वसेवा तु तन्त्रज्ञैर्गुरुदेवादिपूजनम् । सदाचारस्तपो मुक्त्यद्वेषश्चेह प्रकीर्तिता ॥ १०९ ॥
माता पिता कलाचार्य एतेषां ज्ञातयस्तथा । वृद्धा धर्मोपदेष्टारो गुरुवर्गः सतां मतः ॥ ११० ॥
पूजनं चास्य विज्ञेयं त्रिसन्ध्यं नमनक्रिया । तस्यानवसरेऽप्युच्चैश्चेतस्यारोपितस्य तु ॥ १११ ॥
अभ्युत्थानादियोगश्च तदन्ते निभृतासनम् । नामग्रहश्च नास्थाने नावर्णश्रवणं क्वचित् ॥ ११२ ॥
साराणां च यथाशक्ति वस्त्रादीनां निवेदनम् । परलोकक्रियाणां च कारणं तेन सर्वदा ॥ ११३ ॥
त्यागश्च तदनिष्टानां तदिष्टेषु प्रवर्तनम् । औचित्येन त्विदं ज्ञेयं प्राहुर्धर्माद्यपीडया ॥ ११४ ॥
तदासनाद्यभोगश्च तीर्थे तद्वित्तयोजनम् । तद्बिम्बन्याससंस्कार ऊर्ध्वदेहक्रिया परा ॥ ११५ ॥
पुष्पैश्च बलिना चैव वस्त्रैः स्तोत्रैश्च शोभनैः । देवानां पूजनं ज्ञेयं शौचश्रद्धासमन्वितम् ॥ ११६ ॥
अविशेषेण सर्वेषामधिमुक्तिवशेन वा । गृहिणां माननीया यत्सर्वे देवा महात्मनाम् ॥ ११७ ॥

सर्वान्देवान्नमस्यन्ति नैकं देवं समाश्रिता । जितेन्द्रिया जितक्रोधा दुर्गाण्यतितरन्ति ते ॥ ११८ ॥
चारिसञ्जीवनीचारन्याय एष सतां मत । नान्यथाभीष्टसिद्धिः स्याद्विशेषेणादिकर्मणाम् ॥ ११९ ॥
गुणाधिक्यपरिज्ञानाद्विशेषेऽप्येतदिष्यते । अद्वेषेण तदन्येषां वृत्ताधिक्ये तथात्मन ॥ १२० ॥
पात्रे दीनादिवर्गे च दानं विधिवदिष्यते । पोष्यवर्गाविरोधेन न विरुद्धं स्वतश्च यत् ॥ १२१ ॥
व्रतस्था लिङ्गिन पात्रमपचास्तु विशेषत । स्वसिद्धान्ताविरोधेन वर्तन्ते ये सदैव हि ॥ १२२ ॥
दीनान्धकृपणा ये तु व्याधिग्रस्ता विशेषत । नि स्वा क्रियान्तराशक्ता एतद्वर्गो हि मीलक ॥ १२३ ॥
दत्त यदुपकाराय द्वयोरप्युपजायते । नातुरापथ्यतुल्यं तु तदेतद्विधिवन्मतम् ॥ १२४ ॥
धर्मस्यादिपद दानं दानं दारिद्र्यनाशनम् । जनप्रियकरं दानं दानं कीर्त्यादिवर्धनम् ॥ १२५ ॥
लोकापवादभीरुत्व दीनाभ्युद्धरणादर । कृतज्ञता सुदाक्षिण्य सदाचार प्रकीर्तित ॥ १२६ ॥
सर्वत्र निन्दासन्त्यागो वर्णवादश्च साधुषु । आपद्यदैन्यमत्यन्त तद्वत्सम्पदि नम्रता ॥ १२७ ॥
प्रस्तावे मितभाषित्वमविसंवादन तथा । प्रतिपन्नक्रिया चेति कुलधर्मानुपालनम् ॥ १२८ ॥

असद्व्ययपरित्यागः स्थाने चैतत्क्रिया सदा। प्रधानकार्ये निर्बन्धः प्रमादस्य विवर्जनम् ॥ १२९ ॥
लोकाचारानुवृत्तिश्च सर्वत्रौचित्यपालनम्। प्रवृत्तिर्गर्हिते नेति प्राणैः कण्ठगतैरपि ॥ १३० ॥
तपोऽपि च यथाशक्ति कर्तव्यं पापतापनम्। तच्च चान्द्रायणं कृच्छ्रं मृत्युघ्नं पापसूदनम् ॥ १३१ ॥
एकैकं वर्धयेद्ग्रासं शुक्ले कृष्णे च हापयेत्। भुञ्जीत नामावास्यायामेष चान्द्रायणो विधिः ॥ १३२ ॥
सन्तापनादिभेदेन कृच्छ्रमुक्तमनेकधा। अकृच्छ्रादतिकृच्छ्रेषु हन्त सन्तारणं परम् ॥ १३३ ॥
मासोपवासमित्याहुर्मृत्युघ्नं तु तपोधनाः। मृत्युञ्जयजपोपेतं परिशुद्धं विधानतः ॥ १३४ ॥
पापसूदनमप्येवं तत्तत्पापाद्यपेक्षया। चित्रमन्त्रजपप्रायं प्रत्यापत्तिविशोधितम् ॥ १३५ ॥
कृत्स्नकर्मक्षयान्मुक्तिर्भोगसङ्क्लेशवर्जिता। भवाभिनन्दिनामस्यां द्वेषोऽज्ञाननिबन्धनः ॥ १३६ ॥
श्रूयन्ते चैतदालापा लोके तावदशोभनाः। शास्त्रेष्वपि हि मूढानामश्रोतव्याः सदा सताम् ॥ १३७ ॥
वरं वृन्दावने रम्ये क्रोष्टुत्वमभिवाञ्छितम्। न त्वेवाविषयो मोक्षः कदाचिदपि गौतम? ॥ १३८ ॥
महामोहाभिभूतानामेवं द्वेषोऽत्र जायते। अकल्याणवतां पुंसां तथा संसारवर्धनः ॥ १३९ ॥

नास्ति येषामथ तत्र तेऽपि धन्याः प्रकीर्तिताः । भवबीजपरित्यागात्तथा कल्याणभागिन ॥ १४० ॥
सज्ज्ञानादिश्च यो मुक्तेरुपायः समुदाहृतः । मलनायैव तत्रापि न चेष्टैषां प्रवर्तते ॥ १४१ ॥
स्वाराधनाद्यथैतस्य फलमुक्तमनुत्तरम् । मलनायास्त्वनर्थोऽपि महानेव तथैव हि ॥ १४२ ॥
उत्तुङ्गारोहणात्पातो विषान्नात्तृप्तिरेव च । अनर्थाय यथात्यन्त मलनापि तथेक्ष्यताम् ॥ १४३ ॥
अत एव च शस्त्राग्निव्यालदुर्ग्रहसन्निभ । श्रामण्यदुर्ग्रहोऽस्त्वन्त शास्त्र उक्तो महात्मभि ॥ १४४ ॥
ग्रैवेयकाप्तिरप्येव नात्त श्लाघ्या सुनीतित । यथाऽन्यायार्जिता सम्पद्विपाकविरसत्वत ॥ १४५ ॥
अनेनापि प्रकारेण द्वेषाभावोऽत्र तत्त्वत । हितस्तु यच्चदेतेऽपि तथाकल्याणभागिन ॥ १४६ ॥
येषामेव न मुक्त्यादौ द्वेषो गुर्वादिपूजनम् । त एव चारु कुर्वन्ति नान्ये तद्गुरुदोषत ॥ १४७ ॥
सद्वेष्टितमपि स्तोक गुरुदोषवतो न तत् । भौतहन्तुर्यथान्यत्र पादस्पर्शनिषेधनम् ॥ १४८ ॥

१ जह चेव उ मोक्खफलं आणा आराहिया जिणिन्दाण । संसारदुक्खफलया तह चेव विराहिया नवरं ॥१॥ २ किम कस्य विध्वंसरस्य कुत्रोऽपि मस्तावाचपोचनासं (मस्तकपीनां) पादेन स्पर्शनं महतेऽनर्थाय सम्यक्त्व इतिगुरुधर्मेषात्मस्य कदाचिन्मूलपिच्छोः

दिदृक्षाभवबीजादिशब्दवाच्या तथा तथा । इष्टा चान्यैरपि ह्येषा मुक्तिमार्गावलम्बिभिः ॥ १६९ ॥
एवं चापगमोऽप्यस्याः प्रत्यावर्तं सुनीतितः । स्थित एव तदल्पत्वे भावशुद्धिरपि ध्रुवा ॥ १७० ॥
ततः शुभमनुष्ठानं सर्वमेव हि देहिनाम् । विनिवृत्ताग्रहत्वेन तथाबन्धेऽपि तत्त्वतः ॥ १७१ ॥
नात एवाणवस्तस्य प्राग्वत्सङ्क्लेशहेतवः । तथान्तस्तत्त्वसंशुद्धेरुदग्रशुभभावतः ॥ १७२ ॥
सत्साधकस्य चरमा समयापि बिभीषिका । न खेदाय यथात्यन्तं तद्वदेतद्विभाव्यताम् ॥ १७३ ॥
सिद्धेरासन्नभावेन यः प्रमोदो विजृम्भते । चेतस्यस्य कुतस्तेन खेदोऽपि लभतेऽन्तरम् ॥ १७४ ॥
न चेयं महतोऽर्थस्य सिद्धिरात्यन्तिकी न च । मुक्तिः पुनर्द्वयोपेता सत्प्रमोदास्पदं ततः ॥ १७५ ॥
आसन्ना चेयमस्योच्चैश्चरमावर्तिनो यतः । भूयांसोऽमी व्यतिक्रान्तास्तदेकोऽत्र न किञ्चन ॥ १७६ ॥
अत एव च योगज्ञैरपुनर्बन्धकादयः । भावसारा विनिर्दिष्टास्तथापेक्षादिवर्जिताः ॥ १७७ ॥
भवाभिनन्दिदोषाणां प्रतिपक्षगुणैर्युतः । वर्धमानगुणप्रायो ह्यपुनर्बन्धको मतः ॥ १७८ ॥
अस्यैषा मुख्यरूपा स्यात्पूर्वसेवा यथोदिता । कल्याणाशययोगेन शेषस्याप्युपचारतः ॥ १७९ ॥

अनाभोगवतश्चैतदननुष्ठानमुच्यते । सम्प्रमुग्धं मनोऽस्येति ततश्चैतद्यथोदितम् ॥ १५८ ॥
एतद्रागादिदं हेतुं श्रेष्ठं योगविदो विदुः । सदनुष्ठानभावस्य शुभभावांशयोगतः ॥ १५९ ॥
जिनोदितमिति त्वाहुर्भावसारमदः पुनः । संवेगगर्भमत्यन्तममृतं मुनिपुङ्गवाः ॥ १६० ॥
एवं च कर्तृभेदेन चरमेऽन्यादृशं स्थितम् । पुद्गलानां परावर्ते गुरुदेवादिपूजनम् ॥ १६१ ॥
यतो विशिष्टः कर्तायं तदन्येभ्यो नियोगतः । तद्योगयोग्यताभेदादिति सम्यग्विचिन्त्यताम् ॥ १६२ ॥
चतुर्थमेतत्प्रायेण ज्ञेयमस्य महात्मनः । सहजाल्पमलत्वं तु युक्तिरत्र पुरोदिता ॥ १६३ ॥
सहजं तु मलं विद्यात्कर्मसम्बन्धयोग्यताम् । आत्मनोऽनादिमत्त्वेऽपि नायमेनां विना यतः ॥ १६४ ॥
अनादिमानपि ह्येष बन्धत्वं नातिवर्तते । योग्यतामन्तरेणापि भावेऽस्यातिप्रसङ्गता ॥ १६५ ॥
एवं चानादिमान्मुक्तो योग्यताविकलोऽपि हि । बध्येत कर्मणा न्यायात्तदन्यामुक्तवृन्दवत् ॥ १६६ ॥
तदन्यकर्मविरहान्न चेत्तद्बन्ध इष्यते । तुल्ये तद्योग्यताभावे ननु किं तेन चिन्त्यताम् ॥ १६७ ॥
तस्मादवश्यमेष्टव्या स्वाभाविक्येव योग्यता । तस्यानादिमती सा च मलनान्मल उच्यते ॥ १६८ ॥

दिदृक्षाभवबीजादिशब्दवाच्या तथा तथा । इष्टा चान्यैरपि ह्येषा मुक्तिमार्गावलम्बिभिः ॥ १६९ ॥
एवं चापगमोऽप्यस्याः प्रत्यावर्तं सुनीतितः । स्थित एव तदल्पत्वे भावशुद्धिरपि ध्रुवा ॥ १७० ॥
ततः शुभमनुष्ठानं सर्वमेव हि देहिनाम् । विनिवृत्ताग्रहत्वेन तथाबन्धेऽपि तत्त्वतः ॥ १७१ ॥
नात एवाणवस्तस्य प्राग्वत्सङ्क्लेशहेतवः । तथान्तस्तत्त्वसंशुद्धेरुदग्रशुभभावतः ॥ १७२ ॥
सत्साधकस्य चरमा समयापि बिभीषिका । न खेदाय यथात्यन्तं तद्वदेतद्विभाव्यताम् ॥ १७३ ॥
सिद्धेरासन्नभावेन यः प्रमोदो विजृम्भते । चेतस्यस्य कुतस्तेन खेदोऽपि लभतेऽन्तरम् ॥ १७४ ॥
न चेयं महतोऽर्थस्य सिद्धिरात्यन्तिकी न च । मुक्तिः पुनर्द्वयोपेता सत्प्रमोदास्पदं ततः ॥ १७५ ॥
आसन्ना चेयमस्योच्चैश्चरमावर्तिनो यतः । भूयांसोऽमी व्यतिक्रान्तास्तदेकोऽत्र न किञ्चन ॥ १७६ ॥
अत एव च योगज्ञैरपुनर्बन्धकादयः । भावसारा विनिर्दिष्टास्तथापेक्षादिवर्जिताः ॥ १७७ ॥
भवाभिनन्दिदोषाणां प्रतिपक्षगुणैर्युतः । वर्धमानगुणप्रायो ह्यपुनर्बन्धको मतः ॥ १७८ ॥
अस्यैषा मुख्यरूपा स्यात्पूर्वसेवा यथोदिता । कल्याणाशययोगेन शेषस्याप्युपचारतः ॥ १७९ ॥

कृतश्चास्या उपन्यासः शेषापेक्षोऽपि कार्यतः । नासन्नोऽप्यस्य बाहुल्यादन्यथैतत्प्रदर्शकः ॥ १८० ॥
शुध्यल्लोके यथा रत्नं जात्यं काञ्चनमेव वा। गुणैः संयुज्यते चित्रैस्तद्वदात्मापि दृश्यताम् ॥ १८१ ॥
तत्प्रकृत्यैव शेषस्य केचिदेनां प्रचक्षते । आलोचनाद्यभावेन तथानाभोगसङ्गताम् ॥ १८२ ॥
युज्यते चैतदप्येवं तीव्रे मलविपे न यत् । तदावेगो भवासङ्गस्तस्योच्चैर्विनिवर्तते ॥ १८३ ॥
संक्लेशायोगतो भूयः कल्याणाङ्गतया च यत् । तात्त्विकी प्रकृतिर्ज्ञेया तदन्या तूपचारतः ॥ १८४ ॥
एनां चाश्रित्य शास्त्रेषु व्यवहारः प्रवर्तते । ततश्चाधिकृतं वस्तु नान्यथेति स्थितं ह्यदः ॥ १८५ ॥
शान्तोदात्तत्वमत्रैव शुद्धानुष्ठानसाधनम् । सूक्ष्मभावोहसंयुक्तं तत्त्वसंवेदनानुगम् ॥ १८६ ॥
शान्तोदात्तः प्रकृत्येह शुभभावाश्रयो मतः । धन्यो भोगसुखस्येव वित्ताढ्यो रूपवान्युवा ॥ १८७ ॥
अनीदृशस्य च यथा न भोगसुखमुत्तमम् । अशान्तादेस्तथा शुद्धं नानुष्ठानं कदाचन ॥ १८८ ॥
मिथ्याविकल्परूपं तु द्वयोर्द्वयमपि स्थितम् । स्वबुद्धिकल्पनाशिल्पिनिर्मितं न तु तत्त्वतः ॥ १८९ ॥
भोगाङ्गशक्तिवैकल्यं दरिद्रायौवनस्थयोः । सुरूपरागाशङ्के च कुरूपस्य स्वयोषिति ॥ १९० ॥

अभिमानसुखाभावे तथा क्लिष्टान्तरात्मनः। अपायशक्तियोगाच्च न हीत्थं भोगिनः सुखम् ॥ १९१ ॥

अतोऽन्यस्य तु धन्यादेरिदमत्यन्तमुत्तमम्। यथा तथैव शान्तादेः शुद्धानुष्ठानमित्यपि ॥ १९२ ॥

क्रोधाद्यबाधितः शान्त उदात्तस्तु महाशयः। शुभानुबन्धिपुण्याच्च विशिष्टमतिसङ्गतः ॥ १९३ ॥

ऊहतेऽयमतः प्रायो भवबीजादिगोचरम्। कान्तादिगतगेयादि तथा भोगीव सुन्दरम् ॥ १९४ ॥

प्रकृतेर्भेदयोगेन नासमो नाम आत्मनः। हेत्वभेदादिदं चारु न्यायमुद्रानुसारतः ॥ १९५ ॥

एवं च सर्वस्तद्योगादयमात्मा तथा तथा। भवे भवेदतः सर्वप्राप्तिरस्याविरोधिनी ॥ १९६ ॥

सांसिद्धिकमलाद्यद्वा न हेतोरस्ति सिद्धता। तद्भिन्नं यदभेदेऽपि तत्कालादिविभेदतः ॥ १९७ ॥

विरोधिन्यपि चैवं स्यात्तथा लोकेऽपि दृश्यते। स्वरूपेतरहेतुभ्यां भेदादेः फलचित्रता ॥ १९८ ॥

एवमूहप्रधानस्य प्रायो मार्गानुसारिणः। एतद्वियोगविषयोऽप्येष सम्यक् प्रवर्तते ॥ १९९ ॥

एवंलक्षणयुक्तस्य प्रारम्भादेव चापरैः। योग उक्तोऽस्य विद्वद्भिर्गोपेन्द्रेण यथोदितम् ॥ २०० ॥

योजनाद्योग इत्युक्तो मोक्षेण मुनिसत्तमैः। स निवृत्ताधिकारायां प्रकृतौ लेशतो ध्रुवः ॥ २०१ ॥

वेलावलनवन्नद्यास्तदापूरोपसङ्गते । प्रतिस्रोतोनुगत्वेन प्रत्यह वृद्धिसयुत ॥ २०२ ॥
भिन्नग्रन्थेस्तु यस्यायो मोक्षे चित्त भवे तनु । तस्य तत्सर्व एवेह योगो योगो हि भावत ॥ २०३ ॥
नार्या यथान्यसक्तायास्तत्र भावे सदा स्थिते। तद्योग पापबन्धश्च तथा मोक्षेऽस्य दृश्यताम् ॥ २०४ ॥
न चेह ग्रन्थिभेदेन पश्यतो भावमुत्तमम् । इतरेणाकुलस्यापि तत्र चित्त न जायते ॥ २०५ ॥
चारु चैतद्यतो ह्यस्य तथोह सम्प्रवर्तते । एतद्वियोगविषय शुद्धानुष्ठानभाक् स यत् ॥ २०६ ॥
प्रकृतेरा यतश्चैव नाप्रवृत्त्यादिधर्मताम् । तथा विहाय घटत ऊहोऽस्य विमल मन ॥ २०७ ॥
सति चास्मिन्स्फुरद्रत्नकल्पे सत्त्वोल्वणत्वत । भावस्तैमित्यत शुद्धमनुष्ठान सदैव हि ॥ २०८ ॥
एतश्च योगहेतुत्वाद्योग इत्युचित वच । मुख्यायां पूर्वसेवायामवतारोऽस्य केवलम् ॥ २०९ ॥
त्रिधा शुद्धमनुष्ठान सच्छास्त्रपरतन्त्रता । सम्यक्प्रत्ययवृत्तिश्च तथात्रैव प्रचक्षते ॥ २१० ॥
विषयात्मानुबन्धैस्तु त्रिधा शुद्धमुदाहृतम् । अनुष्ठान प्रधानत्व ज्ञेयमस्य यथोत्तरम् ॥ २११ ॥
आद्य यदेव मुक्त्यर्थं क्रियते पतनाद्यपि । तदेव मुक्त्युपादेयलेशभावाच्छुभ मतम् ॥ २१२ ॥

द्वितीयं तु यमाद्येव लोकदृष्ट्या व्यवस्थितम् । न यथाशास्त्रमेवेह सम्यग्ज्ञानाद्ययोगतः ॥ २१३ ॥
तृतीयमप्यदः किन्तु तत्त्वसंवेदनानुगम् । प्रशान्तवृत्त्या सर्वत्र दृढमौत्सुक्यवर्जितम् ॥ २१४ ॥
आद्यान्न दोषविगमस्तमोबाहुल्ययोगतः । तद्योग्यजन्मसन्धानमत एके प्रचक्षते ॥ २१५ ॥
मुक्ताविच्छापि यच्छ्लाघ्या तमःक्षयकरी मता । तस्याः समन्तभद्रत्वादानिदर्शनामित्यदः ॥ २१६ ॥
द्वितीयाद्दोषविगमो न त्वेकान्तानुबन्धनात् । गुरुलाघवचिन्तादि न यत्तत्र नियोगतः ॥ २१७ ॥
अत एवेदमार्याणां बाह्यमन्तर्मलीमसम् । कुराजपुरसच्छालयत्नकल्पं व्यवस्थितम् ॥ २१८ ॥
तृतीयाद्दोषविगमः सानुबन्धो नियोगतः । गृहाद्यभूमिकाऽऽपाततुल्यः कैश्चिदुदाहृतः ॥ २१९ ॥
एतदभ्युदयफलदं गुरुलाघवचिन्तया । अतः प्रवृत्तिः सर्वैव सदैव हि महोदया ॥ २२० ॥
परलोकविधौ शास्त्रात्प्रायो नान्यदपेक्षते । आसन्नभव्यो मतिमान् श्रद्धाधनसमन्वितः ॥ २२१ ॥
उपदेशं विनाप्यर्थकामौ प्रति पटुर्जनः । धर्मस्तु न विना शास्त्रादिति तत्रादरो हितः ॥ २२२ ॥

---

१ शास्त्रलक्षणं चेदम् ॥ शासनसामर्थ्येन तु सन्त्राणबलेन चानवद्येन । युक्तं यत्तच्छास्त्रं तच्चैतत्सर्वविद्वचनम् ॥ १ ॥

अर्थादाम्रविधानेऽपि तद्भावः परं नृणाम् । धर्मेऽविधानतोऽनर्थः [1]क्रियोदाहरणात्परः ॥ २२३ ॥
तस्मात्सदैव धर्मार्थी शास्त्रयत्नः प्रशस्यते । लोके मोहान्धकारेऽस्मिञ्शास्त्रालोकः प्रवर्तकः ॥ २२४ ॥
पापामयौषधं शास्त्रं शास्त्रं पुण्यनिबन्धनम् । चक्षुः सर्वत्रगं शास्त्रं शास्त्रं सर्वार्थसाधनम् ॥ २२५ ॥
न यस्य भक्तिरेतस्मिंस्तस्य धर्मक्रियापि हि । अन्धप्रेक्षाक्रियातुल्या कर्मदोषादसत्फला ॥ २२६ ॥
यः श्राद्धो मन्यते मान्यानहङ्कारविवर्जितः । गुणरागी महाभागस्तस्य धर्मक्रिया परा ॥ २२७ ॥
यस्य त्वनादरः शास्त्रे तस्य श्रद्धादयो गुणाः । उन्मत्तगुणतुल्यत्वान्न प्रशंसास्पदं सताम् ॥ २२८ ॥
मलिनस्य यथात्यन्तं जलं वस्त्रस्य शोधनम् । अन्तःकरणरत्नस्य तथा शास्त्रं विदुर्बुधाः ॥ २२९ ॥
शास्त्रे भक्तिर्जगद्वन्द्यैर्मुक्तेर्दूती परोदिता । अत्रैवेयमतो न्याय्या तत्प्राप्त्यासन्नभावतः ॥ २३० ॥
तथात्मगुरुलिङ्गानि प्रत्ययस्त्रिविधो मतः । सर्वत्र सदनुष्ठाने योगमार्गे विशेषतः ॥ २३१ ॥
आत्मा तदभिलाषी स्याद्गुरुराह तदेव तु । तल्लिङ्गोपनिपातश्च सम्पूर्णं सिद्धिसाधनम् ॥ २३२ ॥

---

१ क्रियागृह्यान्वमायम् ॥ पत्तियक्किरूण किरियं दीये विरुद्धं निसेवय को उ । अपयत्तगा उ अहियं सिग्घं च संपावई विणासं ॥१॥

सिद्ध्यन्तरस्य सद्बीजं या सा सिद्धिरिहोच्यते। ऐकान्तिक्यन्यथा नैव पातशक्त्यनुवेधतः ॥ २३३ ॥
सिद्ध्यन्तरं न सन्धत्ते या सावश्यं पतत्यतः। तच्छक्त्याप्यनुविद्धैव पातोऽसौ तत्त्वतो मतः ॥ २३४ ॥
सिद्ध्यन्तराङ्गसंयोगात्साध्वी चैकान्तिकी भृशम्। आत्मादिप्रत्ययोपेता तदेषा नियमेन तु ॥ २३५ ॥
न ह्युपायान्तरोपेयमुपायान्तरतोऽपि हि। हाठिकानामपि यतस्तत्प्रत्ययपरो भवेत् ॥ २३६ ॥
पठितः सिद्धिदूतोऽयं प्रत्ययो ह्यत एव हि। सिद्धिहस्तावलम्बश्च तथान्यैर्मुख्ययोगिभिः ॥ २३७ ॥
अपेक्षते ध्रुवं ह्येनं सद्योगारम्भकस्तु यः। नान्यः प्रवर्तमानोऽपि तत्र दैवनियोगतः ॥ २३८ ॥
आगमात्सर्व एवायं व्यवहारः स्थितो यतः। तत्रापि हाठिको यस्तु हन्ताज्ञानां स शेखरः ॥ २३९ ॥
तत्कारी स्यात्स नियमात्तद्द्वेषी चेति यो जडः। आगमार्थे तमुल्लङ्घ्य तत एव प्रवर्तते ॥ २४० ॥
न च सद्योगभव्यस्य वृत्तिरेवंविधापि हि। न जात्वजात्यधर्मान्यज्जात्यः सन् भजते शिखी ॥ २४१ ॥
एतस्य गर्भयोगेऽपि मातॄणां श्रूयते परः। औचित्यारम्भनिष्पत्तौ जनश्लाघ्यो महोदयः ॥ २४२ ॥
जात्यकाञ्चनतुल्यास्तत्प्रतिपच्चन्द्रसन्निभाः। सदोजोरत्नतुल्याश्च लोकाभ्युदयहेतवः ॥ २४३ ॥

औचित्यारम्भिणोऽक्षुद्रा प्रेक्षावन्त शुभाशया । अवन्ध्यचेष्टा कालज्ञा योगधर्माधिकारिण ॥२४४॥
यथात्र शिखिदृष्टान्त शास्त्रे प्रोक्तो महात्मभि । स तदण्डरसादीनां सच्छक्त्यादिप्रसाधन ॥२४५॥
प्रवृत्तिरपि चैतेषा धैर्यात्सर्वत्र वस्तुनि । अपायपरिहारेण दीर्घालोचनसङ्गता ॥ २४६ ॥
तत्पर्णत्वसमाक्रान्तचित्तरत्नविभूषणा । साध्यसिद्धावनौत्सुक्यगाम्भीर्यस्तिमितानना ॥ २४७ ॥
फलवद्द्रुमसद्बीजप्ररोहसदृश तथा । साध्वनुष्ठानमित्युक्त सानुबन्ध महर्षिभि ॥ २४८ ॥
अन्तर्विवेकसम्भूत शान्तोदात्तमविप्लुतम् । नाग्रोद्भवलताप्राय बहिश्चेष्टाधिमुक्तिकम् ॥ २४९ ॥
इष्यते चैतदप्यत्र विषयोपाधिसङ्गतम् । निदर्शितमिद तावत्पूर्वमत्रैव लेशतः ॥ २५० ॥
अपुनर्बन्धकस्यैव सम्यग्नीत्योपपद्यते । तत्तन्त्रोक्तमखिलमवस्थाभेदसश्रयात् ॥ २५१ ॥
स्वतन्त्रनीतितस्त्वेव ग्रन्थिभेदे तथा सति । सम्यग्दृष्टिर्भवत्युच्चैः प्रशमादिगुणान्वित ॥ २५२ ॥
शुश्रूषा धर्मरागश्च गुरुदेवादिपूजनम् । यथाशक्ति विनिर्दिष्ट लिङ्गमस्य महात्मभि ॥ २५३ ॥
न किन्नरादिगेयादौ शुश्रूषा भोगिनस्तथा । यथा जिनोक्तावस्येति हेतुसामर्थ्यभेदत ॥ २५४ ॥

तुच्छं च तुच्छनिलयाप्रतिबद्धं च तद्यतः । गेयं जिनोक्तिस्त्रैलोक्यभोगसंसिद्धिसङ्गता ॥ २५५ ॥

हेतुभेदो महानेवमनयोर्यद्व्यवस्थितः । चरमात्तद्युज्यतेऽत्यन्तं भावातिशययोगतः ॥ २५६ ॥

धर्मरागोऽधिकोऽस्यैवं भोगिनः स्त्र्यादिरागतः । भावतः कर्मसामर्थ्यात्प्रवृत्तिस्त्वन्यथापि हि ॥ २५७ ॥

न चैवं तत्र नो राग इति युक्त्योपपद्यते । हविःपूर्णप्रियो विप्रो भुङ्क्ते यत्पूयिकाद्यपि ॥ २५८ ॥

पातात्त्वस्येत्वरं कालं भावोऽपि विनिवर्तते । वातरेणुभृतं चक्षुः स्त्रीरत्नमपि नेक्षते ॥ २५९ ॥

भोगिनोऽस्य स दूरेण भावसारं तथेक्षते । सर्वकर्तव्यतात्यागाद्गुरुदेवादिपूजनम् ॥ २६० ॥

निजं न हापयत्येव कालमत्र महामतिः । सारतामस्य विज्ञाय सद्भावप्रतिबन्धतः ॥ २६१ ॥

शक्तेर्न्यूनाधिकत्वेन नात्राप्येष प्रवर्तते । प्रवृत्तिमात्रमेतद्यद्यथाशक्ति तु सत्फलम् ॥ २६२ ॥

एवम्भूतोऽयमाख्यातः सम्यग्दृष्टिर्जिनोत्तमैः । यथाप्रवृत्तिकरणव्यतिक्रान्तो महाशयः ॥ २६३ ॥

करणं परिणामोऽत्र सत्त्वानां तत्पुनस्त्रिधा । यथाप्रवृत्तिमाख्यातमपूर्वमनिवृत्ति च ॥ २६४ ॥

एतत्त्रिधापि भव्यानामन्येषामाद्यमेव हि । ग्रन्थिं यावत्त्विदं तं तु समतिक्रामतोऽपरम् ॥ २६५ ॥

भिन्नग्रन्थेस्तृतीय तु सम्यग्दृष्टेरतो हि न। पतितस्याऽऽप्यते बन्धो ग्रन्थिमुल्लङ्घ्य देशित ॥ २६६ ॥
एव सामान्यतो ज्ञेयः परिणामोऽस्य शोभनः। मिथ्यादृष्टेरपि सतो महाबन्धविशेषत ॥ २६७ ॥
सागरोपमकोटीनां कोट्यो मोहस्य सप्ततिः। अभिन्नग्रन्थिबन्धो यन्न त्वेकोऽपीतरस्य तु ॥ २६८ ॥
तदत्र परिणामस्य भेदकत्व नियोगत । बाह्य त्वसदनुष्ठान प्रायस्तुल्य द्वयोरपि ॥ २६९ ॥
अयमस्यामवस्थायां बोधिसत्त्वोऽभिधीयते । अन्यैस्तल्लक्षण यस्मात्सर्वमस्योपपद्यते ॥ २७० ॥
कायपातिन एवेह बोधिसत्त्वाः परोदितम्। न चित्तपातिनस्तावदेतदत्रापि युक्तिमत् ॥ २७१ ॥
परार्थरसिको धीमान्मार्गगामी महाशय । गुणरागी तथेत्यादि सर्व तुल्य द्वयोरपि ॥ २७२ ॥
यत्सम्यग्दर्शन बोधिस्तत्प्रधानो महोदय । सत्त्वोऽस्तु बोधिसत्त्वस्तद्धन्तैषोऽन्वर्थतोऽपि हि ॥ २७३ ॥
वरबोधिसमेतो वा तीर्थकृद्यो भविष्यति । तथाभव्यत्वतोऽसौ वा बोधिसत्त्व सतां मत ॥ २७४ ॥
सांसिद्धिकमिद ज्ञेय सम्यक्चित्र च देहिनाम्। तथा कालादिभेदेन बीजसिद्ध्यादिभावतः ॥ २७५ ॥
सर्वथा योग्यताभेदे तदभावोऽन्यथा भवेत्। निमित्तानामपि प्राप्तिस्तुल्या यत्तन्नियोगत ॥ २७६ ॥

अन्यथा योग्यताभेदः सर्वथा नोपपद्यते । निमित्तोपनिपातोऽपि यत्तदाक्षेपतो ध्रुवम् ॥ २७७ ॥
योग्यता चेह विज्ञेया बीजसिद्ध्याद्यपेक्षया । आत्मनः सहजा चित्रा तथाभव्यत्वमित्यतः ॥ २७८ ॥
वरबोधेरपि न्यायात्सिद्धिर्नो हेतुभेदतः । फलभेदो यतो युक्तस्तथा व्यवहितादपि ॥ २७९ ॥
तथा च भिन्ने दुर्भेदे कर्मग्रन्थिमहाबले । तीक्ष्णेन भाववज्रेण बहुसङ्क्लेशकारिणि ॥ २८० ॥
आनन्दो जायतेऽत्यन्तं तात्त्विकोऽस्य महात्मनः । सद्व्याध्यभिभवे यद्वद्व्याधितस्य महौषधात् ॥ २८१ ॥
भेदोऽपि चास्य विज्ञेयो न भूयो भवनं तथा । तीव्रसङ्क्लेशविगमात्सदा निःश्रेयसावहः ॥ २८२ ॥
जात्यन्धस्य यथा पुंसश्चक्षुर्लाभे शुभोदये । सद्दर्शनं तथैवास्य ग्रन्थिभेदेऽपरे जगुः ॥ २८३ ॥
अनेन भवनैर्गुण्यं सम्यग्वीक्ष्य महाशयः । तथाभव्यत्वयोगेन विचित्रं चिन्तयत्यसौ ॥ २८४ ॥
मोहान्धकारगहने संसारे दुःखिता बत । सत्त्वाः परिभ्रमन्त्युच्चैः सत्यस्मिन्धर्मतेजसि ॥ २८५ ॥
अहमेतानतः कृच्छ्राद्यथायोगं कथञ्चन । अनेनोत्तारयामीति वरबोधिसमन्वितः ॥ २८६ ॥
करुणादिगुणोपेतः परार्थव्यसनी सदा । तथैव चेष्टते धीमान्वर्धमानमहोदयः ॥ २८७ ॥

तत्तस्कल्याणयोगेन कुर्वन्सत्त्वार्थमेव स । तीर्थकृत्त्वमवाप्नोति पर सत्त्वार्थसाधनम् ॥ २८८ ॥
चिन्तयत्येवमेवैतत्स्वजनादिगत तु य । तथानुष्ठानत सोऽपि धीमान् गणधरो भवेत् ॥ २८९ ॥
[1]सविग्नो भवनिर्वेदादात्मनि सरण तु यः। आत्मार्थं सम्प्रवृत्तोऽसौ सदा स्यान्मुण्डकेवली ॥ २९० ॥
तथाभव्यत्वतश्चित्रनिमित्तोपनिपातत । एव चिन्तादिसिद्धिश्च सन्न्यायागमसङ्गता ॥ २९१ ॥
एव कालादिभेदेन बीजसिद्ध्यादिसस्थिति । सामग्र्यपेक्षया न्यायादन्यथा नोपपद्यते ॥ २९२ ॥
तत्तत्स्वभावता चित्रा तदन्यापेक्षणी तथा। सर्वाभ्युपगमव्याप्त्या न्यायश्चात्र निदर्शित ॥ २९३ ॥
अधिमुक्त्याशयस्थैर्यविशेषवदिहापरे । इष्यते सदनुष्ठान हेतुरत्रैव वस्तुनि ॥ २९४ ॥
विशेष चास्य मन्यन्त ईश्वरानुग्रहादिति । प्रधानपरिणामात्तु तथान्ये तत्त्ववादिन ॥ २९५ ॥
तत्तत्स्वभावतां मुक्त्वा नोभयत्राप्यदो भवेत्। एष च छद्मस्था यत्रापि हन्तैषैव निबन्धनम् ॥ २९६ ॥
आर्ष्यं व्यापारमाश्रित्य न च दोषोऽपि विद्यते । अत्र माध्यस्थ्यमालम्ब्य यदि सम्यग्निरूप्यते ॥२९७॥

---

१ तथ्ये धर्मे ध्वस्तहिंसाप्रबन्धे देवे रागद्वेषमोहादिमुक्ते । साधौ सर्वग्रन्थसन्दर्भहीने संवेगोऽसौ निश्चलो योऽनुराग ॥ १ ॥

गुणप्रकर्षरूपो यत्सर्वैर्वन्द्यस्तथेष्यते । देवतातिशयः कश्चित्स्तवादेः फलदस्तथा ॥ २९८ ॥
भवंश्चाप्यात्मनो यस्मादन्यतश्चित्रशक्तिकात् । कर्माद्य(देर)भिधानादेर्नान्यथातिप्रसङ्गतः ॥ २९९ ॥
माध्यस्थ्यमवलम्ब्यैवमैदम्पर्यव्यपेक्षया । तत्त्वं निरूपणीयं स्यात्कालातीतोऽप्यदोऽब्रवीत् ॥ ३०० ॥
अन्येषामप्ययं मार्गो मुक्ताविद्यादिवादिनाम् । अभिधानादिभेदेन तत्त्वनीत्या व्यवस्थितः ॥ ३०१ ॥
मुक्तो बुद्धोऽर्हन्वापि यदैश्वर्येण समन्वितः । तदीश्वरः स एव स्यात्संज्ञाभेदोऽत्र केवलम् ॥ ३०२ ॥
अनादिशुद्ध इत्यादिर्यश्च भेदोऽस्य कल्प्यते । तत्तत्तन्त्रानुसारेण मन्ये सोऽपि निरर्थकः ॥ ३०३ ॥
विशेषस्यापरिज्ञानाद्युक्तीनां जातिवादतः । प्रायो विरोधतश्चैव फलाभेदाच्च भावतः ॥ ३०४ ॥
अविद्याक्लेशकर्मादि यतश्च भवकारणम् । ततः प्रधानमेवैतत्संज्ञाभेदमुपागतम् ॥ ३०५ ॥
अस्यापि योऽपरो भेदश्चित्रोपाधिस्तथा तथा । गीयतेऽतीतहेतुभ्यो धीमतां सोऽप्यपार्थकः ॥ ३०६ ॥
ततोऽस्थानप्रयासोऽयं यत्तद्भेदनिरूपणम् । सामान्यमनुमानस्य यतश्च विषयो मतः ॥ ३०७ ॥
साधु चैतद्यतो नीत्या शास्त्रमत्र प्रवर्तकम् । तथाभिधानभेदात्तु भेदः कुचितिकाग्रहः ॥ ३०८ ॥

विपश्चितां न युक्तोऽयमैदम्पर्यप्रिया हि ते। यथोक्तास्तत्पुनश्चारु हन्तात्रापि निरूप्यताम ॥ ३०९ ॥
उभयो परिणामित्व तथाभ्युपगमाद् ध्रुवम् । अनुग्रहात्प्रवृत्तेश्च तथाद्यामेदतः स्थितम् ॥ ३१० ॥
सर्वेषां तत्स्वभावत्वात्तदेतदुपपद्यते । नान्यथाऽतिप्रसङ्गेन सूक्ष्मबुद्ध्या निरूप्यताम् ॥ ३११ ॥
आत्मनां तत्स्वभावत्वे प्रधानस्यापि सस्थिते । ईश्वरस्यापि सन्न्यायाद्विशेषोऽधिकृतो भवेत् ॥ ३१२ ॥
सांसिद्धिक च सर्वेषामेतदाहुर्मनीषिण । अन्ये [1]नियतभावत्वादन्यथा न्यायवादिन ॥ ३१३ ॥
सांसिद्धिकमदोऽप्येवमन्यथा नोपपद्यते। योगिनो वा विजानन्ति किमस्थानग्रहेण न ॥ ३१४ ॥
अस्थान रूपमन्धस्य यथा सन्निश्चय प्रति। तथैवातीन्द्रिय वस्तु छद्मस्थस्यापि तत्त्वत ॥ ३१५ ॥
हस्तस्पर्शसम शास्त्र तत एव कथञ्चन । अत्र तन्निश्चयोऽपि स्यात्तथा चन्द्रोपरागवत् ॥ ३१६ ॥
ग्रह सर्वत्र सन्त्यज्य तद् गम्भीरेण चेतसा । शास्त्रगर्भः समालोच्यो ग्राह्यश्चेष्टार्थसङ्गत ॥ ३१७ ॥

---

१ प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः सोऽवश्यं भवति नृणां शुभो शुभो वा ॥ भूतानां महति कृतेऽपि हि प्रयत्ने नाऽभाव्य भवति न भाविनोऽस्ति नाशः ॥

दैवं पुरुषकारश्च तुल्यावेतदपि स्फुटम् । एवं व्यवस्थिते तत्त्वे युज्यते न्यायतः परम् ॥ ३१८ ॥

दैवं नामेह तत्त्वेन कर्मैव हि शुभाशुभम् । तथा पुरुषकारश्च स्वव्यापारो हि सिद्धिदः ॥ ३१९ ॥

स्वरूपं निश्चयेनैतदनयोस्तत्त्ववेदिनः । ब्रुवते व्यवहारेण चित्रमन्योन्यसंश्रयम् ॥ ३२० ॥

न भवस्थस्य यत्कर्म विना व्यापारसम्भवः । न च व्यापारशून्यस्य फलं यत्कर्मणोऽपि हि ॥ ३२१ ॥

व्यापारमात्रात्फलदं निष्फलं महतोऽपि च । अतो यत्कर्म तद्दैवं चित्रं ज्ञेयं हिताहितम् ॥ ३२२ ॥

एवं पुरुषकारस्तु व्यापारबहुलस्तथा । फलहेतुर्नियोगेन ज्ञेयो जन्मान्तरेऽपि हि ॥ ३२३ ॥

अन्योन्यसंश्रयावेवं द्वावप्येतौ विचक्षणैः । उक्तावन्यैस्तु कर्मैव केवलं कालभेदतः ॥ ३२४ ॥

दैवमात्मकृतं विद्यात्कर्म यत्पौर्वदेहिकम् । स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ॥ ३२५ ॥

नेदमात्मक्रियाभावे यतः स्वफलसाधकम् । अतः पूर्वोक्तमेवेह लक्षणं तात्त्विकं तयोः ॥ ३२६ ॥

दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते । दैवेन चैषोऽपीत्येतन्नान्यथा चोपपद्यते ॥ ३२७ ॥

कर्मणा कर्ममात्रस्य नोपघातादि तत्त्वतः । स्वव्यापारगतत्वे तु तस्यैतदपि युज्यते ॥ ३२८ ॥

उभयोस्ततस्वभावत्वे तत्तत्कालाद्यपेक्षया। बाध्यबाधकभाव स्यात्सम्यग्न्यायाविरोधतः ॥ ३२९ ॥
तथा च तत्स्वभावत्वनियमात्कर्तृकर्मणो ।फलभावोऽन्यथा तु स्यान्न काङ्कटुकपाक्तिवत् ॥ ३३० ॥
कर्मानियतभाव तु यस्स्याच्चित्र फल प्रति । तद्बाध्यमत्र दार्वादिप्रतिमायोग्यतासमम् ॥ ३३१ ॥
नियमात्प्रतिमा नात्र न चातोऽयोग्यतैव हि । तल्लक्षणनियोगेन प्रतिमेवास्य वाधक ॥ ३३२ ॥
दार्वादेः प्रतिमाक्षेपे तद्भाव सर्वतो ध्रुव ।योग्यस्यायोग्यता चेति न चैषा लोकसिद्धित ॥ ३३३ ॥
कर्मणोऽप्येतदाक्षेपे दानादौ भावभेदत । फलभेद कथ नु स्यात्तथा शास्त्रादिसङ्गत ॥ ३३४ ॥
शुभाच्चतस्त्वसौ भावो हन्ताय तत्स्वभावभाक्। एव किमत्र सिद्ध स्याच्चत एवास्त्वतो मद ॥ ३३५ ॥
तत्त्व पुनर्द्वयस्यापि तत्स्वभावत्वसस्थितौ । भवत्येवमिद न्यायात्तत्प्राधान्याद्यपेक्षया ॥ ३३६ ॥
एव च चरमावर्ते परमार्थेन बाध्यते । दैव पुरुषकारेण प्रायशो व्यत्ययोऽन्यदा ॥ ३३७ ॥
तुल्यत्वमेवमनयोर्व्यवहाराद्यपेक्षया । सूक्ष्मबुद्ध्याऽवगन्तव्य न्यायशास्त्राऽविरोधत ॥ ३३८ ॥
एव पुरुषकारेण ग्रन्थिभेदोऽपि सङ्गत । तदूर्ध्व बाध्यते दैव प्रायोऽय तु विजृम्भते ॥ ३३९ ॥

अस्यौचित्यानुसारित्वात्प्रवृत्तिर्नासती भवेत् । सत्प्रवृत्तिश्च नियमाद् ध्रुवः कर्मक्षयो यतः ॥ ३४० ॥

संसारादस्य निर्वेदस्तथोच्चैः पारमार्थिकः । संज्ञानचक्षुषा सम्यक्तन्नैर्गुण्योपलब्धितः ॥ ३४१ ॥

मुक्तौ दृढानुरागश्च तथा तद्गुणसिद्धितः । विपर्ययो महादुःखबीजनाशाच्च तत्त्वतः ॥ ३४२ ॥

एतत्त्यागाप्तिसिद्ध्यर्थमन्यथा तदभावतः । अस्यौचित्यानुसारित्वमलमिष्टार्थसाधनम् ॥ ३४३ ॥

औचित्यं भावतो यत्र तत्रायं सम्प्रवर्तते । उपदेशं विनाप्युच्चैरन्तस्तेनैव चोदितः ॥ ३४४ ॥

अतस्तु भावो भावस्य तत्त्वतः सम्प्रवर्तकः । शिराकूपे पय इव पयोवृद्धेर्नियोगतः ॥ ३४५ ॥

निमित्तमुपदेशस्तु पचनादिसमो मतः । अनैकान्तिकभावेन सतामत्रैव वस्तुनि ॥ ३४६ ॥

प्रक्रान्ताद्यदनुष्ठानादौचित्येनोत्तरं भवेत् । तदाश्रित्योपदेशोऽपि ज्ञेयो विद्यादिगोचरः ॥ ३४७ ॥

प्रकृतेर्वाऽऽनुगुण्येन चित्रः सद्भावसाधनः । गम्भीरोक्त्या मितश्चैव शास्त्राध्ययनपूर्वकः ॥ ३४८ ॥

शिरोदकसमो भाव आत्मन्येव व्यवस्थितः । प्रवृत्तिरस्य विज्ञेया चाभिव्यक्तिस्ततस्ततः ॥ ३४९ ॥

सत्क्षयोपशमात्सर्वमनुष्ठानं शुभं मतम् । क्षीणसंसारचक्राणां ग्रन्थिभेदादयं यतः ॥ ३५० ॥

भावशुद्धिरतोऽवश्य सानुबन्ध शुभोदयम् । गीयतेऽन्यैरपि ह्येतत्सुवर्णघटसन्निभम् ॥ ३५१ ॥
एव तु वर्तमानोऽय चारित्री जायते ततः । पल्योपमपृथक्त्वेन विनिवृत्तेन कर्मण ॥ ३५२ ॥
लिङ्ग मार्गानुसार्येष श्राद्ध प्रज्ञापनाप्रिय । गुणरागी महासत्त्व सच्छक्त्यारम्भसङ्गतः ॥ ३५३ ॥
असातोदयशून्योऽन्ध कान्तारपतितो यथा । गर्तादिपरिहारेण सम्यक्तत्राभिगच्छति ॥ ३५३ ॥
तथाय भवकान्तारे पापादिपरिहारत । श्रुतचक्षुर्विहीनोऽपि सत्सातोदयसयुत ॥ ३५४ ॥
अनीदृशस्य तु पुनश्चारित्र शब्दमात्रकम् । ईदृशस्यापि वैकल्य विचित्रत्वेन कर्मणाम् ॥ ३५५ ॥
देशादिभेदतश्चित्रमिद चोक्त महात्मभि । अत्र पूर्वोदितो योगोऽध्यात्मादि सम्प्रवर्तते ॥ ३५६ ॥
औचित्याद्वृत्तयुक्तस्य वचनात्तत्त्वचिन्तनम् । मैत्र्यादिसारमत्यन्तमध्यात्म तद्विदो विदु ॥ ३५७ ॥
अत पापक्षय सत्त्व शील ज्ञान च शाश्वतम् । तथाऽनुभवससिद्धममृत ह्यद एव तु ॥ ३५८ ॥
अभ्यासोऽस्यैव विज्ञेय प्रत्यह वृद्धिसङ्गत । मनःसमाधिसयुक्त पौन पुन्येन भावना ॥ ३५९ ॥
निवृत्तिरशुभाभ्यासाच्छुभाभ्यासानुकूलता । तथा सुचित्तवृद्धिश्च भावनाया फल मतम् ॥ ३६० ॥

शुभैकालम्बनं चित्तं ध्यानमाहुर्मनीषिणः । स्थिरप्रदीपसदृशं सूक्ष्माभोगसमन्वितम् ॥ ३६१ ॥

वशिता चैव सर्वत्र भावस्तैमित्यमेव च । अनुबन्धव्यवच्छेद उदर्कोऽस्येति तद्विदः ॥ ३६२ ॥

अविद्याकल्पितेषूच्चैरिष्टानिष्टेषु वस्तुषु । संज्ञानात्तद्व्युदासेन समता समतोच्यते ॥ ३६३ ॥

ऋद्ध्यप्रवर्तनं चैव सूक्ष्मकर्मक्षयस्तथा । अपेक्षातन्तुविच्छेदः फलमस्याः प्रचक्षते ॥ ३६४ ॥

अन्यसंयोगवृत्तीनां यो निरोधस्तथा तथा । अपुनर्भावरूपेण स तु तत्संक्षयो मतः ॥ ३६५ ॥

अतोऽपि केवलज्ञानं शैलेशीसम्परिग्रहः । मोक्षप्राप्तिरनाबाधा सदानन्दविधायिनी ॥ ३६६ ॥

तात्त्विकोऽतात्त्विकश्चायमिति यच्चोदितं पुरा । तस्येदानीं यथायोगं योजनात्राभिधीयते ॥ ३६७ ॥

अपुनर्बन्धकस्यायं व्यवहारेण तात्त्विकः । अध्यात्मभावनारूपो निश्चयेनोत्तरस्य तु ॥ ३६८ ॥

सकृदावर्तनादीनामतात्त्विक उदाहृतः । प्रत्यपायफलप्रायस्तथावेषादिमात्रतः ॥ ३६९ ॥

चारित्रिणस्तु विज्ञेयः शुद्ध्यपेक्षो यथोत्तरम् । ध्यानादिरूपो नियमात्तथा तात्त्विक एव तु ॥ ३७० ॥

अस्यैव त्वनपायस्य सानुबन्धस्तथा स्मृतः । यथोदितक्रमेणैव सापायस्य तथाऽपरः ॥ ३७१ ॥

अपायमाहु कर्मैव निरपाया पुरातनम् । पापाशयकर चित्र निरुपक्रमसज्ञकम् ॥ ३७२ ॥
कण्टकज्वरमोहैस्तु समो विघ्न प्रकीर्तित । मोक्षमार्गप्रवृत्तानामत एवापरैरपि ॥ ३७३ ॥
अस्यैव सास्रव प्रोक्तो बहुजन्मान्तरावह । पूर्वव्यावर्णितन्यायादेकजन्मा त्वनास्रवः ॥ ३७४ ॥
आस्रवो बन्धहेतुत्वाद्बन्ध एवेह यन्मत । स साम्परायिको मुख्यस्तदेषोऽर्थोऽस्य सङ्गत ॥ ३७५ ॥
एव चरमदेहस्य सम्परायवियोगत । इत्वरास्रवभावेऽपि स तथानास्रवो मत ॥ ३७६ ॥
निश्चयेनात्र शब्दार्थ सर्वत्र व्यवहारतः । निश्चयव्यवहारौ च द्वावप्यभिमतार्थदौ ॥ ३७७ ॥
सक्षेपात्सफलो योग इति सन्दर्शितो ह्ययम् । आद्यन्तौ तु पुनः स्पष्ट ब्रूमोऽस्यैव विशेषत ॥ ३७८ ॥
तत्त्वचिन्तनमध्यात्ममौचित्यादियुतस्य तु । उक्त विचित्रमेतच्च तथाऽवस्थादिभेदत ॥ ३७९ ॥
आदिकर्मकमाश्रित्य जपो ह्यध्यात्ममुच्यते । देवताऽनुग्रहाङ्गत्वादतोऽयमभिधीयते ॥ ३८० ॥
जपः सन्मन्त्रविषयः स चोक्तो देवतास्तव । दृष्ट पापापहारोऽस्माद्विषापहरण यथा ॥ ३८१ ॥
देवतापुरतो वापि जले वाऽकलुषात्मनि । विशिष्टद्रुमकुञ्जे वा कर्तव्योऽय सतां मत ॥ ३८२ ॥

पर्वोपलक्षितो यद्वा पुत्रञ्जीवकमालया । नासाग्रस्थितया दृष्ट्या प्रशान्तेनान्तरात्मना ॥ ३८३ ॥

विधाने चेतसो वृत्तिस्तद्वर्णेषु तथेष्यते । अर्थे चालम्बने चैव त्यागश्चोपप्लवे सति ॥ ३८४ ॥

मिथ्याचारपरित्याग आश्वासात्तत्र वर्तनम् । तच्छुद्धिकामता चेति त्यागोऽत्यागोऽयमीदृशः ॥ ३८५ ॥

यथाप्रतिज्ञमस्येह कालमानं प्रकीर्तितम् । अतो ह्यकरणेऽप्यत्र भाववृत्तिं विदुर्बुधाः ॥ ३८६ ॥

मुनीन्द्रैः शस्यते तेन यत्नतोऽभिग्रहः शुभः । सदातो भावतो धर्मः क्रियाकाले क्रियोद्भवः ॥ ३८७ ॥

स्वौचित्यालोचनं सम्यक्ततो धर्मप्रवर्तनम् । आत्मसम्प्रेक्षणं चैव तदेतदपरे जगुः ॥ ३८८ ॥

योगेभ्यो जनवादाच्च लिङ्गेभ्योऽथ यथागमम् । स्वौचित्यालोचनं प्राहुर्योगमार्गकृतश्रमाः ॥ ३८९ ॥

योगाः कायादिकर्माणि जनवादस्तु तत्कथा । शकुनादीनि लिङ्गानि स्वौचित्यालोचनास्पदम् ॥ ३९० ॥

एकान्तफलदं ज्ञेयमतो धर्मप्रवर्तनम् । अत्यन्तं भावसारत्वात्तत्रैव प्रतिबन्धतः ॥ ३९१ ॥

तद्भङ्गादिभयोपेतस्तत्सिद्धौ चोत्सुको दृढम् । यो धीमानिति सन्न्यायात्स यदौचित्यमीक्षते ॥ ३९२ ॥

आत्मसम्प्रेक्षणं चैव ज्ञेयमारब्धकर्माणि । पापकर्मोदयादत्र भयं तदुपशान्तये ॥ ३९३ ॥

विस्रोतोगमने न्याय्य भयादौ शरणादिवत् । गुर्वाद्याश्रयण सम्यक्तत स्याद्दुरितक्षय ॥ ३९४ ॥
सर्वमेवेदमध्यात्म कुशलाशयभावत । औचित्याद्यत्र नियमाल्लक्षण यत्पुरोदितम् ॥ ३९५ ॥
देवादिवन्दन सम्यक्प्रतिक्रमणमेव च । मैत्र्यादिचिन्तन चैतत्सत्त्वादिष्वपरे विदु ॥ ३९६ ॥
स्थानकालक्रमोपेत शब्दार्थानुगत तथा । अन्यासमोहजनक श्रद्धासवेगसूचकम् ॥ ३९७ ॥
प्रोल्लसद्भावरोमाञ्च वर्धमानशुभाशयम् । अवनामादिसशुद्धमिष्ट देवादिवन्दनम् ॥ ३९८ ॥
प्रतिक्रमणमप्येव सति दोषे प्रमादत । तृतीयौषधकल्पत्वाद्द्विसन्ध्यमथवाऽसति ॥ ३९९ ॥
निषिद्धासेवनादि यद्विषयोऽस्य प्रकीर्तित । तदेतद्भावसशुद्धे कारण परम मतम् ॥ ४०० ॥
मैत्रीप्रमोदकारुण्यमाध्यस्थ्यपरिचिन्तनम् । सत्त्वगुणाधिकक्लिश्यमानाऽप्रज्ञाप्यगोचरम् ॥ ४०१ ॥
विवेकिनो विशेषेण भवत्येतद्यथागमम् । तथा गम्भीरचित्तस्य सम्यग्मार्गानुसारिण ॥ ४०२ ॥
एव विचित्रमध्यात्ममेतदन्वर्थयोगत । आत्मन्यधीति सवृत्तेर्ज्ञेयमध्यात्मचिन्तकै ॥ ४०३ ॥
भावनादित्रयाभ्यासाद्वर्णितो वृत्तिसक्षय । स चात्मकर्मसयोगयोग्यताऽपगमोऽर्थत ॥ ४०४ ॥

अन्यसंयोगजाश्चैता योग्यताबीजमस्य तु ॥ ४०५ ॥
स्थूरसूक्ष्मा यतश्चेष्टा आत्मनो वृत्तयो मताः । अन्यसंयोगजाश्चैता योग्यताबीजमस्य तु ॥ ४०६ ॥
तदभावेऽपि तद्भावो युक्तो नातिप्रसङ्गतः । मुख्यैषा भवमातेति तदस्या अयमुत्तमः ॥ ४०७ ॥
पल्लवाद्यपुनर्भावो न स्कन्धापगमे तरोः । स्यान्मूलापगमे यद्वत्तद्वद्भवतरोरपि ॥ ४०८ ॥
मूलं च योग्यता ह्यस्य विज्ञेयोदितलक्षणा । पल्लवा वृत्तयश्चित्रा हन्त तत्त्वमिदं परम् ॥ ४०९ ॥
उपायोपगमे चास्या एतदाक्षिप्त एव हि । तत्त्वतोऽधिकृतो योग उत्साहादिस्तथास्य तु ॥ ४१० ॥
उत्साहान्निश्चयाद्धैर्यात्सन्तोषात्तत्त्वदर्शनात् । मुनेर्जनपदत्यागात्षड्भिर्योगः प्रसिध्यति ॥ ४११ ॥
आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥ ४१२ ॥
आत्मा कर्माणि तद्योगः सहेतुरखिलस्तथा । फलं द्विधा वियोगश्च सर्वं तत्तत्स्वभावतः ॥ ४१३ ॥
अस्मिन्पुरुषकारोऽपि सत्येव सफलो भवेत् । अन्यथा न्यायवैगुण्याद्भवन्नपि न शस्यते ॥ ४१४ ॥
अतोऽकरणानियमात्तत्तद्वस्तुगतात्तथा । वृत्तयोऽस्मिन्निरुध्यन्ते तास्तास्तद्बीजसम्भवाः ॥ ४१५ ॥
ग्रन्थिभेदे यथैवाऽयं बन्धहेतुं परं प्रति । नरकादिगतिष्वेवं ज्ञेयस्तद्धेतुगोचरः

अन्यथाऽऽत्यन्तिको मृत्युर्भूयस्तत्र गतिस्तथा। न युज्यते हि सन्न्यायादित्यादि समयोदितम्॥ ४१६ ॥
हेतुमस्य परं भावं सत्त्वार्थोद्योगनिवर्तनम्। प्रधानकरुणारूपं ब्रुवते सूक्ष्मदर्शिनः ॥ ४१७ ॥
समाधिरेष एवाऽन्यैः सम्प्रज्ञातोऽभिधीयते। सम्यक्प्रकर्षरूपेण वृत्त्यर्थज्ञानतस्तथा ॥ ४१८ ॥
एवमासाद्य चरमं जन्माऽजन्मत्वकारणम्। श्रेणिमाप्य ततः क्षिप्रं केवलं लभते क्रमात् ॥ ४१९ ॥
असम्प्रज्ञात एषोऽपि समाधिर्गीयते परैः। निरुद्धाशेषवृत्त्यादि तत्स्वरूपानुवेधतः ॥ ४२० ॥
धर्ममेघोऽमृतात्मा च भवशत्रुः शिवोदयः। सत्त्वानन्दः परश्चेति योज्योऽत्रैवार्थयोगतः ॥ ४२१ ॥
मण्डूकभस्मन्यायेन वृत्तिबीजं महामुनिः। योग्यतापगमाद्दग्ध्वा ततः कल्याणमश्नुते ॥ ४२२ ॥
यथोदितायाः सामग्र्यास्तत्स्वाभाव्यनियोगतः। योग्यतापगमोऽप्येवं सम्यग्ज्ञेयो महात्मभिः ॥ ४२३ ॥
साक्षादतीन्द्रियानर्थान्दृष्ट्वा केवलचक्षुषा। अधिकारवशात्कश्चिद्देशनायां प्रवर्तते ॥ ४२४ ॥
प्रकृष्टपुण्यसामर्थ्यात्प्रातिहार्यसमन्वितः। अवन्ध्यदेशनः श्रीमान्यथाभव्यं नियोगतः ॥ ४२५ ॥
'केचित्तु योगिनोऽप्येतदिष्टं नेच्छन्ति केवलम्। अन्ये तु मुक्त्यवस्थायां सहकारिवियोगतः ॥ ४२६ ॥

चैतन्यमात्मनो रूपं न च तज्ज्ञानतः पृथक् । युक्तितो युज्यतेऽन्ये तु ततः केवलमाश्रिताः ॥४२७॥

अस्मादतीन्द्रियज्ञप्तिस्ततः सद्देशनागमः । नान्यथा छिन्नमूलत्वादेतदन्यत्र दर्शितम् ॥ ४२८ ॥

तथा चेहात्मनो ज्ञत्वे संविदस्योपपद्यते । एषां चानुभवात्सिद्धा प्रतिप्राण्येव देहिनाम् ॥ ४२९ ॥

अग्नेरुष्णत्वकल्पं तज्ज्ञानमस्य व्यवस्थितम् । प्रतिबन्धकसामर्थ्यान्न स्वकार्ये प्रवर्तते ॥ ४३० ॥

ज्ञो ज्ञेये कथमज्ञः स्यादसति प्रतिबन्धके । दाह्येऽग्निर्दाहको न स्यात्कथमप्रतिबन्धकः ॥ ४३१ ॥

न देशविप्रकर्षोऽस्य युज्यते प्रतिबन्धकः । तथाऽनुभवसिद्धत्वादग्नेरिव सुनीतितः ॥ ४३२ ॥

अंशतस्त्वेष दृष्टान्तो धर्ममात्रत्वदर्शकः । अदाह्यादहनाद्येवमत एव न बाधकम् ॥ ४३३ ॥

सर्वत्र सर्वसामान्यज्ञानाज्ज्ञेयत्वसिद्धितः । तस्याखिलविशेषेषु तदेतन्न्यायसङ्गतम् ॥ ४३४ ॥

सामान्यवद्विशेषाणां स्वभावो ज्ञेयभावतः । ज्ञायते स च साक्षात्त्वाद्विना विज्ञायते कथम् ॥ ४३५ ॥

अतोऽयं ज्ञस्वभावत्वात्सर्वज्ञः स्यान्नियोगतः । नान्यथा ज्ञत्वमस्येति सूक्ष्मबुद्ध्या निरूप्यताम् ॥४३६॥

---

१ अतीन्द्रियाणामर्थानां साक्षाद्द्रष्टा न विद्यते । वचनेन हि नित्येन यः पश्यति स पश्यति ॥ श्लो० ४२६ केचित्पदाज्जैमिनीयमतं ॥

एव च तत्त्वतोऽसार यदुक्त मतिशालिना । इह व्यतिकरे किञ्चिच्चारुचुञ्चुधिया सुभाषितम् ॥ ४३७ ॥
ज्ञानवान्मृग्यते कश्चित्तदुक्तप्रतिपत्तये । अज्ञोपदेशकरणे विप्रलम्भनशङ्किभि॰ ॥ ४३८ ॥
तस्मादनुष्ठानगत ज्ञानमस्य विचार्यताम् । कीटसङ्ख्यापरिज्ञान तस्य न क्वोपयुज्यते ॥ ४३९ ॥
हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदक । य प्रमाणमसाविष्टो न तु सर्वस्य वेदक ॥ ४४० ॥
दूर पश्यतु वा मा वा तत्त्वमिष्ट तु पश्यतु । प्रमाण दूरदर्शी चेदेत गृध्रानुपास्महे ॥ ४४१ ॥
एवमाद्युक्तसन्नीत्या हेयाद्यपि च तत्त्वतः । तत्त्वस्यासर्वदर्शी न वेत्त्यावरणभावत ॥ ४४२ ॥
बुद्ध्यध्यवसित यस्मादर्थं चेतयते पुमान् । इतीष्टा चेतना चेह सांविस्सिद्धा जगत्त्रये ॥ ४४३ ॥
चैतन्य च निज रूप पुरुषस्योदित यत । तत आवरणाभावे नैतस्त्वफलकृत्कुतः ॥ ४४४ ॥
न निमित्तवियोगेन तद्ध्यावरणसङ्गतम् । न च तत्स्वभावत्वात्संवेदनमिद यत ॥ ४४५ ॥
चैतन्यमेव विज्ञानमिति नास्माकमागम॰ । किन्तु तन्महतो धर्म प्राकृतश्च महानपि ॥ ४४६ ॥

१ प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ १ ॥ इति सांख्याः ॥

गीयते तत्र नन्वेतत्स्वयमेव निभाल्यताम् ॥ ४४७ ॥
बुद्ध्यध्यवसितस्यैवं कथमर्थस्य चेतनम् । मनः करोति सान्निध्यादुपाधिः स्फटिकं यथा ॥ ४४८ ॥
पुरुषोऽविकृतात्मैव स्वनिर्भासमचेतनम् । मनः करोति सान्निध्यादुपाधिः स्फटिकं यथा ॥ ४४९ ॥
विभक्तेदृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते। प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥ ४५० ॥
स्फटिकस्य तथा नाम भावे तदुपधेस्तथा। विकारो नान्यथासौ स्यादन्धाश्मन इव स्फुटम् ॥ ४५१ ॥
तथा नामैव सिद्धैव विक्रियाप्यस्य तत्त्वतः । चैतन्यविक्रियाप्येवमस्तु ज्ञानं च सात्मनः ॥ ४५२ ॥
निमित्ताभावतो नो चेन्निमित्तमखिलं जगत्। नान्तःकरणमिति चेत्क्षीणदोषस्य तेन किम् ॥ ४५३ ॥
निरावरणमेतद्यद्विश्वमाश्रित्य विक्रियाम् । न याति यदि तत्त्वेन न निरावरणं भवेत् ॥ ४५४ ॥
दिदृक्षा विनिवृत्तापि नेच्छामात्रनिवर्तनात् । पुरुषस्यापि युक्तेयं स च चिद्रूप एव वः ॥ ४५५ ॥
चैतन्यं चेह संशुद्धं स्थितं सर्वस्य वेदकम् । तन्वे ज्ञाननिषेधस्तु प्राकृतापेक्षया भवेत् ॥ ४५६ ॥
आत्मदर्शनतश्च स्यान्मुक्तिर्यत्तन्त्रनीतितः । तदस्य ज्ञानसद्भावस्तन्त्रयुक्त्यैव साधितः ॥ ४५७ ॥
नैरात्म्यदर्शनादन्ये निबन्धनवियोगतः । दोषप्रहाणमिच्छन्ति सर्वथा न्याययोगिनः

एव च तत्त्वतोऽसार यदुक्त मतिशालिना । इह व्यतिकरे किञ्चिद्वाल्लुक्या प्रभाषितम् ॥ ४३७ ॥
ज्ञानवान्मृग्यते कश्चित्तदुक्तप्रतिपत्तये । अज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः ॥ ४३८ ॥
तस्मादनुष्ठानगत ज्ञानमस्य विचार्यताम् । कीटसङ्ख्यापरिज्ञान तस्य न क्वोपयुज्यते ॥ ४३९ ॥
हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदक । य प्रमाणमसाविष्टो न तु सर्वस्य वेदक ॥ ४४० ॥
दूर पश्यतु वा मा वा तत्त्वमिष्ट तु पश्यतु । प्रमाण दूरदर्शी चेदेत गृध्रानुपास्महे ॥ ४४१ ॥
एवमाद्युक्तसन्नीत्या हेयाद्यपि च तत्त्वतः । तत्त्वस्यासर्वदर्शी न वेत्त्यावरणभावत ॥ ४४२ ॥
बुद्ध्यध्यवसित यस्मादर्थं चेतयते पुमान् । इतीष्ट चेतना चेह संवित्सिद्धा जगत्त्रये ॥ ४४३ ॥
चैतन्य च निजं रूप पुरुषस्योदित यत । तत आवरणाभावे नैतस्त्वफलकृत्कृत ॥ ४४४ ॥
न निमित्तवियोगेन तद्रूपावरणसङ्गतम् । न च तत्तत्स्वभावत्वात्सवेदनमिद यत ॥ ४४५ ॥
चैतन्यमेव विज्ञानमिति नास्माकमागम । किन्तु तन्महतो धर्म प्राकृतश्च महानपि ॥ ४४६ ॥

१ प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ १ ॥ इति सांख्याः ॥

बुद्ध्यध्यवसितस्यैवं कथमर्थस्य चेतनम्। गीयते तत्र नन्वेतत्स्वयमेव निभाल्यताम् ॥ ४४७ ॥
पुरुषोऽविकृतात्मैव स्वनिर्भासमचेतनम्। मनः करोति सान्निध्यादुपाधिः स्फटिकं यथा ॥ ४४८ ॥
विभक्तेदृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते। प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥ ४४९ ॥
स्फटिकस्य तथा नाम भावे तदुपधेस्तथा। विकारो नान्यथासौ स्यादन्धाश्मन इव स्फुटम् ॥ ४५० ॥
तथा नामैव सिद्धैव विक्रियाप्यस्य तत्त्वतः। चैतन्यविक्रियाप्येवमस्तु ज्ञानं च सात्मनः ॥ ४५१ ॥
निमित्ताभावतो नो चेन्निमित्तमखिलं जगत्। नान्तःकरणमिति चेत्क्षीणदोषस्य तेन किम् ॥ ४५२ ॥
निरावरणमेतद्यद्विश्वमाश्रित्य विक्रियाम्। न याति यदि तत्त्वेन न निरावरणं भवेत् ॥ ४५३ ॥
दिदृक्षा विनिवृत्तापि नेच्छामात्रनिवर्तनात्। पुरुषस्यापि युक्तेयं स च चिद्रूप एव वः ॥ ४५४ ॥
चैतन्यं चेह संशुद्धं स्थितं सर्वस्य वेदकम्। तन्त्वे ज्ञाननिषेधस्तु प्राकृतापेक्षया भवेत् ॥ ४५५ ॥
आत्मदर्शनतश्च स्यान्मुक्तिर्यत्तन्त्रनीतितः। तदस्य ज्ञानसद्भावस्तन्त्रयुक्त्यैव साधितः ॥ ४५६ ॥
नैरात्म्यदर्शनादन्ये निबन्धनवियोगतः। दोषप्रहाणमिच्छन्ति सर्वथा न्याययोगिनः ॥ ४५७ ॥

समाधिराज एतत्तदेतत्तत्स्वदर्शनम् । आग्रहच्छेदकार्ये तत्तदेतदमृत परम् ॥ ४५८ ॥

तृष्णा यज्जन्मनो योनिर्ध्रुवा सा चात्मदर्शनात् । तदभावान्न तद्भावस्तत्ततो मुक्तिरित्यपि ॥ ४५९ ॥

न ह्यपश्यन्नहमिति स्निह्यत्यात्मनि कश्चन । न चात्मनि विना प्रेम्णा सुखकामोऽभिधावति ॥ ४६० ॥

सत्यात्मनि स्थिरे प्रेम्णि न वैराग्यस्य सम्भव । न च रागवतो मुक्तिर्दातव्योऽस्या जलाञ्जलि ॥४६१॥

नैरात्म्यमात्मनोऽभाव क्षणिको वाऽयमित्यदः । विचार्यमाण नो युक्त्या द्वयमप्युपपद्यते ॥ ४६२ ॥

सर्वथैवात्मनोऽभावे सर्वा चिन्ता निरर्थका । सति धर्मिणि धर्मा यच्चिन्त्यन्ते नीतिमद्भ्यः ॥ ४६३ ॥

नैरात्म्यदर्शन कस्य को वाऽस्य प्रतिपादक । एकान्ततुच्छतायां हि प्रतिपाद्यस्तथेह क ॥ ४६४ ॥

[1]कुमारीसुतजन्मादिस्वप्नबुद्धिसमोदिता । भ्रान्ति सर्वेयमिति चेन्ननु सा धर्म एव हि ॥ ४६५ ॥

कुमार्या भाव एवेह यदेतदुपपद्यते । वन्ध्यापुत्रस्य लोकेऽस्मिन्न जातु स्वप्नदर्शनम् ॥ ४६६ ॥

क्षणिकत्व तु नैवाऽस्य क्षणादूर्ध्वं विनाशत । अन्यस्याभावतोऽसिद्धेरन्यथान्वयभावत ॥ ४६७ ॥

---

१ यथा कुमारी स्वप्नान्तरेऽस्मिन् जातं च पुत्रं विगतं च पश्येत् । जाते च तुष्टा विगते च खिन्ना तथोपमान् जानत सर्वधर्मान् ॥१॥

॥ ४६८ ॥

भावाविच्छेद एवायमन्वयो गीयते यतः । स चानन्तरभावित्वे हेतोरस्यानिवारितः ॥ ४६९ ॥

स्वनिवृत्तिस्वभावत्वे क्षणस्य नापरोदयः । अन्यजन्मस्वभावत्वे स्वनिवृत्तिरसङ्गता ॥ ४७० ॥

इत्थं द्वयैकभावत्वे न विरुद्धोऽन्वयोऽपि हि । व्यावृत्त्याद्येकभावत्वयोगतो भाव्यतामिदम् ॥ ४७१ ॥

अन्वयार्थस्य न आत्मा चित्रभावो यतो मतः । न पुनर्नित्य एवेति ततो दोषो न कश्चन ॥ ४७२ ॥

न चात्मदर्शनादेव स्नेहो यत्कर्महेतुकः । नैरात्म्येऽप्यन्यथायं स्याज्ज्ञानस्यापि स्वदर्शनात् ॥ ४७३ ॥

अध्रुवेक्षणतो नो चेत्कोऽपराधो ध्रुवेक्षणे । तद्गता कालचिन्ता चेन्नासौ कर्मनिवृत्तितः ॥ ४७४ ॥

उपप्लववशात्प्रेम सर्वत्रैवोपजायते । निवृत्ते तु न तत्तास्मिन् ज्ञाने [1]ग्राह्यादिरूपवत् ॥ ४७५ ॥

स्थिरत्वमित्थं न प्रेम्णो यतो मुख्यस्य युज्यते । ततो वैराग्यसंसिद्धेर्मुक्तिरस्य नियोगतः ॥ ४७६ ॥

बोधमात्रेऽद्वये तत्त्वे कल्पिते सति कर्मणि । कथं सदा[2]ऽस्या भावादि नेति सम्यग्विचिन्त्यताम् ॥

---

१ ग्राह्यं न तस्य ग्रहणं न तेन ज्ञानान्तरग्राह्यतयापि शून्यम् । तथापि च ज्ञानमप्यप्रकाशः प्रत्यक्षतस्तस्य तथाधि(वि)रासीत् ॥१॥ इति बौद्धाः ॥

२ अस्या मुक्तेः । चित्तमेव हि संसारो रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥ १ ॥

एवमेकान्तनित्योऽपि ह्न्तात्मा नोपपद्यते। स्थिरस्वभाव एकान्ताद्यतो नित्योऽभिधीयते ॥ ४७७ ॥
सदय कर्तृभावः स्याद्भोक्तृभावोऽथवा भवेत्। उभयानुभयभावो वा सर्वथापि न युज्यते ॥ ४७८ ॥
एकान्तकर्तृभावत्वे कथ भोक्तृत्वसम्भवः। भोक्तृभावनियोगेऽपि कर्तृत्व ननु दुःस्थितम् ॥ ४७९ ॥
न चाकृतस्य भोगोऽस्ति कृत चाऽभोगमित्यपि। उभयानुभयभावत्वे विरोधासम्भवौ ध्रुवौ ॥ ४८० ॥
यत्तयोभयभावत्वेऽप्यभ्युपेत विरुध्यते । परिणामित्वसङ्गत्या न त्यागोऽत्रापरोऽपि च ॥ ४८१ ॥
एकान्तानित्यतायां तु तथैकत्वभावत । भवापवर्गभेदोऽपि न मुख्य उपपद्यते ॥ ४८२ ॥
स्वभावापगमे यस्मात्तस्यैव परिणामिता । तयाऽनुपगमे स्वस्य रूपमेक सदैव हि ॥ ४८३ ॥
तत्पुनर्भाविक वा स्यादापवर्गिकमेव वा । आकालमेकमेतद्धि भवमुक्ती न सङ्गते ॥ ४८४ ॥
बन्धाच्च भवससिद्धि सम्बन्धश्चित्रकार्यत । तस्यैकान्तैकभावत्वे न त्वेषोऽप्यनिबन्धन ॥ ४८५ ॥
नृपस्येवाभिधानाद्य सातावन्ध प्रकीर्त्यते । अहिशङ्काविषज्ञाताच्चेतरोऽसौ निरर्थक ॥ ४८६ ॥
एव च योगमार्गोऽपि मुक्तये य प्रकल्प्यते । सोऽपि निर्विषयत्वेन कल्पनामात्रभद्रक ॥ ४८७ ॥

दिदृक्षादिनिवृत्त्यादि पूर्वसूर्युदितं तथा । आत्मनोऽपरिणामित्वे सर्वमेतदपार्थकम् ॥ ४८८ ॥
परिणामिन्यतो नीत्या चित्रभावे तथात्मनि। अवस्थाभेदसङ्गत्या योगमार्गस्य सम्भवः ॥ ४८९ ॥
तत्स्वभावत्वतो यस्मादस्य तात्त्विक एव हि । क्लिष्टस्तदन्यसंयोगात्परिणामो भवावहः ॥ ४९० ॥
स योगाभ्यासजे यो यत्तत्क्षयोपशमादितः । योगोऽपि मुख्य एवेह शुद्धयवस्थास्वलक्षणः ॥ ४९१ ॥
ततस्तथा तु साध्वेव तदवस्थान्तरं परम् । तदेव तात्त्विकी मुक्तिः स्यात्तदन्यवियोगतः ॥ ४९२ ॥
अत एव च निर्दिष्टं नामास्यास्तत्त्ववेदिभिः । वियोगोऽविद्यया बुद्धिः कृत्स्नकर्मक्षयस्तथा ॥ ४९३ ॥
शैलेशीसंज्ञिताच्चेह समाधिरुपजायते । कृत्स्नकर्मक्षयः सोऽयं गीयते वृत्तिसंक्षयः ॥ ४९४ ॥
तथा तथा क्रियाविष्टः समाधिरभिधीयते । निष्ठाप्राप्तस्तु योगज्ञैर्मुक्तिरेष उदाहृतः ॥ ४९५ ॥
संयोगयोग्यताऽभावो यदिहात्मतदन्ययोः । कृतो न जातु संयोगो भूयो नैवं भवस्ततः ॥ ४९६ ॥
योग्यतात्मस्वभावस्तत्कथमस्या निवर्तनम् । तत्तत्स्वभावतायोगादेतल्लेशेन दर्शितम् ॥ ४९७ ॥
स्वनिवृत्तिः स्वभावश्चेदेवमस्य प्रसज्यते । अस्त्वेवमपि नो दोषः कश्चिदत्र विभाव्यते ॥ ४९८ ॥

परिणामित्व एवैतत्सम्यगस्योपपद्यते । आत्माभावेऽन्यथा तु स्यादात्मसत्तेत्यदश्च न ॥ ४९९ ॥
स्वभावविनिवृत्तिश्च स्थितस्यापीह दृश्यते । घटादेर्नवतात्यागे तथा तन्भावसिद्धितः ॥ ५०० ॥
नवताया नचात्यागस्तथा नाऽतत्स्वभावता । घटादेर्न न तन्भाव इत्यत्रानुभव प्रमा ॥ ५०१ ॥
योग्यतापगमेऽप्येवमस्य भावो व्यवस्थित । सर्वौत्सुक्यविनिर्मुक्त स्तिमितोदधिसन्निभः ॥ ५०२ ॥
एकान्तक्षीणसङ्क्लेशो निष्ठितार्थस्ततश्च सः । निराबाध सदानन्दो मुक्तावात्मावतिष्ठते ॥ ५०३ ॥
अस्यावाच्योऽयमानन्द कुमारी स्त्रीसुख यथा । अयोगी न विजानाति सम्यग्जात्यन्धवद्घटम् ॥ ५०४ ॥
योगस्यैतत्फल मुख्यमैकान्तिकमनुत्तरम् । आत्यन्तिक पर ब्रह्म योगविद्भिरुदाहृतम् ॥ ५०५ ॥
सद्गोचरादिसंशुद्धिरेषाऽऽलोच्येह धीधनै । साध्वी चेत्प्रतिपत्तव्या विद्वत्ताफलकाङ्क्षिभि ॥ ५०६ ॥
विद्वत्ताया फल नान्यत्सद्योगाभ्यासत परम् । तथा च शास्त्रससार उक्तो विमलबुद्धिभि ॥ ५०७ ॥
पुत्रदारादिससार पुसां समूढचेतसाम् । विदुषां शास्त्रससार सद्योगरहितात्मनाम् ॥ ५०८ ॥
कृतमत्र प्रसङ्गेन प्रायेणोक्त तु वाञ्छितम् । अनेनैवानुसारेण विज्ञेय शेषमन्यत ॥ ५०९ ॥

एवं तु मूलशुद्ध्येह योगभेदोपवर्णनम्। चारुमात्रादिसत्पुत्रभेदव्यावर्णनोपमम् ॥ ५१० ॥
अन्यद्वाध्येयभेदोपवर्णनाकल्पमित्यतः। न मूलशुद्ध्यभावेन भेदसाम्येऽपि वाचिके ॥ ५११ ॥
यथेह पुरुषाद्वैते बद्धमुक्ताविशेषतः। तदन्याभावनादेव तद्द्वैतेऽपि निरूप्यताम् ॥ ५१२ ॥
अंशावतार एकस्य कुत एकत्वहानितः। निरंश एक इत्युक्तः स चाद्वैतानिबन्धनम् ॥ ५१३ ॥
मुक्तांशत्वे विकारित्वमंशानां नोपपद्यते। तेषां चेहाऽविकारित्वे सन्नीत्या मुक्ततांशिनः ॥ ५१४ ॥
समुद्रोर्मिसमत्वं च यदंशानां प्रकल्प्यते। न हि तद्भेदकाभावे सम्यग्युक्त्योपपद्यते ॥ ५१५ ॥
सदाद्यमत्र हेतुः स्यात्तात्त्विके भेद एव हि। प्रागभावादिसंसिद्धेर्न सर्वथान्यथा त्रयम् ॥ ५१६ ॥
सत्त्वाद्यभेद एकान्ताद्यदि तद्भेददर्शनम्। भिन्नार्थमसदेवेति तद्वदद्वैतदर्शनम् ॥ ५१७ ॥
यदा नार्थान्तरं तत्त्वं विद्यते किञ्चिदात्मनाम्। मालिन्यकारि तत्त्वेन न तदा बन्धसम्भवः॥ ५१८ ॥

---

१ क्षीरे दध्यादि यन्नास्ति प्रागभावः स कथ्यते। नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम् ॥ १ ॥ गवि योऽश्वाद्यभावश्च सोऽन्योन्याभाव उच्यते। शिरसोऽवयवा भिन्ना (निम्ना) वृद्धिकाठिन्यवर्जिताः। शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ॥ २ ॥

असत्यस्मिन् कुतो मुक्तिर्बन्धाभावनिबन्धना । मुक्तमुक्तिर्न यन्न्याय्या भावेऽस्यातिप्रसङ्गिता ॥५१९॥
कल्पितादन्यतो बन्धो न जातु स्यादकल्पितः । कल्पितश्चेत्ततश्चिन्त्यो ननु मुक्तिरकल्पिता ॥ ५२० ॥
नान्यतोऽपि तथाभावादृते तेषां भवादिकम् । तत किं केवलानां तु ननु हेतुसमत्वत ॥ ५२१ ॥
मुक्तस्येव तथाभावकल्पना यक्तिरर्थका । स्यादस्यां प्रभवन्त्यां तु बीजादेवाङ्कुरोदयः ॥ ५२२ ॥
एवमाद्यत्र शास्त्रज्ञैस्तत्त्वतः स्वहितोद्यतैः । माध्यस्थ्यमवलम्ब्योच्चैरालोच्यं स्वयमेव तु ॥ ५२३ ॥
आत्मीय परकीयो वा क सिद्धान्तो विपश्चिताम् । दृष्टेष्टाबाधितो यस्तु युक्तस्तस्य परिग्रह ॥५२४॥
स्वल्पमत्यनुकम्पायै योगशास्त्रमहार्णवात् । आचार्यहरिभद्रेण योगबिन्दु समुद्धृत ॥ ५२५ ॥
समुद्धृत्यार्जित पुण्य यदेन शुभयोगत । भवान्ध्यविरहात्तेन जन स्ताद्योगलोचन ॥ ५२६ ॥

॥ श्रीयोगबिन्दुप्रकरण समाप्तम् ॥

# ॥ अथ षोडशकप्रकरणम् ॥३॥

१ प्रणिपत्य जिनं वीरं सद्धर्मपरीक्षकादिभावानाम् । लिङ्गादिभेदतः खलु वक्ष्ये किञ्चित् समासेन ॥१॥
बालः पश्यति लिङ्गं मध्यमबुद्धिर्विचारयति वृत्तम् । आगमतत्त्वं तु बुधः परीक्षते सर्वयत्नेन ॥ २ ॥
बालो ह्यसदारम्भो मध्यमबुद्धिस्तु मध्यमाचारः । ज्ञेय इह तत्त्वमार्गे बुधस्तु मार्गानुसारी यः ॥ ३ ॥
बाह्यं लिङ्गमसारं तत्प्रतिबद्धा न धर्मनिष्पत्तिः । धारयति कार्यवशतो यस्माच्च विडम्बकोऽप्येतत् ॥४॥
बाह्यग्रन्थत्यागान्न चारु नन्वत्र तादितरस्यापि । कञ्चुकमात्रत्यागान्न हि भुजगो निर्विषो भवति ॥ ५ ॥
मिथ्याचारफलमिदं ह्यपरैरपि गीतमशुभभावस्य । सूत्रेऽप्यविकलमेतत्प्रोक्तममेध्योत्करस्यापि ॥ ६ ॥
वृत्तं चारित्रं खल्वसदारम्भविनिवृत्तिमत् तच्च । सदनुष्ठानं प्रोक्तं कार्ये हेतूपचारेण ॥ ७ ॥
परिशुद्धमिदं नियमादान्तरपरिणामतः सुपरिशुद्धात् । अन्यदतोऽन्यस्मादपि बुधविज्ञेयं त्वचारुतया ॥८॥
गुरुदोषारम्भितया लध्वकरणयत्नतो निपुणधीभिः । सन्निन्दादेश्च तथा ज्ञायत एतान्नियोगेन ॥ ९ ॥

आगमतत्त्व ज्ञेय तद् दृष्टेष्टाविरुद्धवाक्यतया । उत्सर्गादिसमन्वितमलमैदम्पर्यशुद्ध च ॥ १० ॥
आत्माऽस्ति स परिणामी बद्धः सत्कर्मणा विचित्रेण । मुक्तश्च तद्वियोगाद्धिंसाऽहिंसादि तद्धेतु ॥ ११ ॥
परलोकविधौ मान वचन तदतीन्द्रियार्थदृग्व्यक्तम् । सर्वमिदमनादि स्यादैदम्पर्यस्य शुद्धिरिति ॥ १२ ॥
बालादिभावमेव सम्यग् विज्ञाय देहिनां गुरुणा । सद्धर्मदेशनाऽपि हि कर्त्तव्या तदनुसारेण ॥ १३ ॥
यन्नापित मुनीन्द्रै पाप खलु देशना परस्थाने । उन्मार्गनयनमेतद् भवगहने दारुणविपाकम् ॥ १४ ॥
हितमपि वायोरौपधमहित तत् श्लेष्मणो यथाऽत्यन्तम् । सद्धर्मदेशनौपधमेव बालाद्यपेक्षमिति ॥१५॥
एतद्विज्ञायैव यथोचित शुद्धभावसम्पन्न । विधिवदिह य प्रयुङ्क्ते करोत्यसौ नियमतो बोधिम् ॥ १६ ॥

२ बालादीनामेषा यथोचित तद्विदो विधिर्गीत । सद्धर्म्मदेशनायामयमिह सिद्धान्ततत्त्वज्ञैः ॥ १ ॥
बाह्यचरणप्रधाना कर्त्तव्या देशनेह बालस्य । स्वयमपि च तदाचारस्तदग्रतो नियमत सेव्य ॥ २ ॥
सम्यग् लोचविधानं ह्यनुपानत्कत्वमथ धरा शय्या । प्रहरद्वय रजन्याः स्वाप शीतोष्णसहन च ॥ ३ ॥
पष्ठाष्टमादिरूप चित्र बाह्य तपो महाकष्टम् । अल्पोपकरणसन्धारण च तच्छुद्धता चैव ॥ ४ ॥

गुर्व्वी पिंडविशुद्धिश्चित्रा द्रव्याद्यभिग्रहाश्चैव । विकृतीनां सन्त्यागस्तथैकसिक्थादिपारणकम् ॥ ५ ॥
अनियतविहारकल्पः कायोत्सर्गादिकरणमनिशं च । इत्यादि बाह्यमुच्चैः कथनीयं भवति बालस्य ॥६॥
मध्यमबुद्धेस्त्वीर्यासमितिप्रभृति त्रिकोटिपरिशुद्धम् । आद्यन्तमध्ययोगैर्हितदं खलु साधुसद्वृत्तम् ॥७॥
अष्टौ साधुभिरनिशं मातर इव मातरः प्रवचनस्य । नियमेन न मोक्तव्याः परमं कल्याणमिच्छद्भिः ॥८॥
एतत्साचिवस्य सदा साधोर्नियमान्न भवभयं भवति । भवति च हितमत्यन्तं फलदं विधिनागमग्रहणम् ९
गुरुपारतन्त्र्यमेव च तद्बहुमानात्सदाशयानुगतम् । परमगुरुप्राप्तेरिह बीजं तस्माच्च मोक्ष इति ॥ १० ॥
इत्यादि साधुवृत्तं मध्यमबुद्धेः सदा समाख्येयम् । आगमतत्त्वं तु परं बुधस्य भावप्रधानं तु ॥ ११ ॥
वचनाराधनया खलु धर्मस्तद्बाधया त्वधर्म इति । इदमत्र धर्मगुह्यं सर्वस्वं चैतदेवास्य ॥ १२ ॥
यस्मात् प्रवर्त्तकं भुवि निवर्त्तकं चान्तरात्मनो वचनम् । धर्मश्चैतत्संस्थो मौनीन्द्रं चैतदिह परमम् ॥१३॥
अस्मिन् हृदयस्थे सति हृदयस्थस्तत्त्वतो मुनीन्द्र इति। हृदयस्थिते च तस्मिन्नियमात् सर्वार्थसंसिद्धिः १४
चिन्तामणिः परोऽसौ तेनैव भवति समरसापत्तिः । सैषेह योगिमाता निर्वाणफलप्रदा प्रोक्ता ॥१५॥

इति य कथयति धर्मं विज्ञायौचित्ययोगमनघमतिः। जनयति स एनमतुल श्रोतृषु निर्वाणफलदमलम्॥१६॥

३ अस्य स्वलक्षणमिद धर्मस्य बुधै सदैव विज्ञेयम्। सर्वागमपरिशुद्ध यदादिमध्यान्तकल्याणम्॥१॥
धर्मश्चित्तप्रभवो यत क्रियाऽधिकरणाश्रय कार्यम्। मलविगमेनैतत् खलु पुष्ट्यादिमदेष विज्ञेय ॥२॥
रागादयो मला खल्वागमसद्योगतो विगम एषाम्। तदय क्रियाऽत एव हि पुष्टि शुद्धिश्च चित्तस्य॥३॥
पुष्टिः पुण्योपचयः शुद्धि पापक्षयेण निर्मलता। अनुबन्धिनि द्वयेऽस्मिन् क्रमेण मुक्ति परा ज्ञेया॥४॥
न प्रणिधानाद्याशयसंविद्व्यतिरेकतोऽनुबन्धि(न्ध्ये) सत्। भिन्नग्रन्थेर्निर्मलबोधवत स्यादिय च परा॥
प्रणिधिप्रवृत्तिविघ्नजयसिद्धिविनियोगभेदत प्राय। धर्म्मज्ञैराख्यात शुभाशय पञ्चधाऽत्र विधौ॥६॥
प्रणिधान तत्समये स्थितिमत् तदध कृपानुग चैव। निरवद्यवस्तुविषय परार्थनिष्पत्तिसार च॥ ७ ॥
तत्रैव तु प्रवृत्ति शुभसारोपायसङ्गताऽत्यन्तम्। अधिकृतयत्नातिशयादौत्सुक्यविवर्जिता चैव॥ ८ ॥
विघ्नजयस्त्रिविधः खलु विज्ञेयो हीनमध्यमोत्कृष्ट। मार्गे इह कण्टकज्वरमोहजयसम प्रवृत्तिफल ।९।
सिद्धिस्तत्तद्धर्मस्थानावाप्तिरिह तात्त्विकी ज्ञेया। अधिके विनयादियुता हीने च दयादिगुणसारा ॥१०॥

नियमेन भवति पुंसां लोकोत्तरतत्त्वसम्प्राप्तिः ॥ १ ॥
५ एवं सिद्धे धर्मे सामान्येनेह लिङ्गसंयुक्ते । नियमेन भवति पुंसां लोकोत्तरतत्त्वसम्प्राप्तिः ॥ १ ॥

अधिकारिणो नियोगाच्चरम इयं पुद्गलावर्त्ते ॥ २ ॥
आद्यं भावारोग्यं बीजं चैषा परस्य तस्यैव । अधिकारिणो नियोगाच्चरम इयं पुद्गलावर्त्ते ॥ २ ॥

स भवति कालादेव प्राधान्येन सुकृतादिभावेऽपि। ज्वरशमनौषधसमयवदिति समयविदो विदुर्निपुणम् ३

ज्वरशमनीयमिवाभिनवे ज्वरोदयेऽकाल इतिकृत्वा ४
नागमवचनं तदधः सम्यक् परिणमति नियम एषोऽत्र। शमनीयमिवाभिनवे ज्वरोदयेऽकाल इतिकृत्वा ४

पश्यन्त्यपवादात्मकमाविषय इह मन्दधीनयनाः ॥५॥
आगमदीपेऽध्यारोपमण्डलं तत्त्वतोऽसदेव तथा। पश्यन्त्यपवादात्मकमाविषय इह मन्दधीनयनाः ॥५॥

तत्तत्त्वदृशामेषा पापा कथमन्यथा भवति ? ॥ ६ ॥
तत एवाविधिसेवा दानादौ तत्प्रसिद्धफल एव । तत्तत्त्वदृशामेषा पापा कथमन्यथा भवति ? ॥ ६ ॥

अमृतरसास्वादज्ञः को नाम विषे प्रवर्त्तेत ? ॥ ७ ॥
येषामेषा तेषामागमवचनं न परिणतं सम्यक् । अमृतरसास्वादज्ञः को नाम विषे प्रवर्त्तेत ? ॥ ७ ॥

परिणमति तत्त्वतः खलु स चाधिकारी भवत्यस्याः ॥८॥
तस्माच्चरमे नियमादागमवचनमिह पुद्गलावर्त्ते । परिणमति तत्त्वतः खलु स चाधिकारी भवत्यस्याः ॥८॥

तदिह परः सद्बोधः सदनुष्ठानस्य हेतुरिति ॥ ९ ॥
आगमवचनपरिणतिर्भवरोगसदौषधं यदनपायम् । तदिह परः सद्बोधः सदनुष्ठानस्य हेतुरिति ॥ ९ ॥

परहितनिरतस्य सदा गम्भीरोदारभावस्य ॥ १० ॥
दशसंज्ञाविष्कम्भणयोगे सत्यविकलं ह्यदो भवति । परहितनिरतस्य सदा गम्भीरोदारभावस्य ॥ १० ॥

नासुलभमिदं सर्वं शुभमयमलपरिक्षयात् पुंसाम् ११
सर्वज्ञवचनमागमवचनं यत् परिणते ततस्तस्मिन् । नासुलभमिदं सर्वं शुभमयमलपरिक्षयात् पुंसाम् ११

निर्मलबोधोऽप्येव शुश्रूषाभावसम्भवो ज्ञेय । शमगर्भशास्त्रयोगात् श्रुतचिन्ताभावनासार ॥ ६ ॥
युक्त जनप्रियत्व शुद्ध तद्धर्मसिद्धिफलदमलम् । धर्मप्रशसनादेर्बीजाधानादिभावेन ॥ ७ ॥
आरोग्ये सति यद्वत् व्याधिविकारा भवन्ति नो पुसाम् । तद्वद्धर्मारोग्ये पापविकारा अपि ज्ञेया ॥ ८ ॥
तस्यास्य विषयतृष्णा प्रभवत्युच्चैर्न दृष्टिसम्मोह । अरुचिर्न धर्मपथ्ये न च पापा क्रोधकण्डूति ॥ ९ ॥
गम्यागम्यविभाग त्यक्त्वा सर्वत्र वर्त्तते जन्तु । विषयेष्ववितृप्तात्मा यतो भृश विषयतृष्णेयम् ॥१०॥
गुणतस्तुल्ये तत्त्वे सज्ञाभेदागमान्यथादृष्टि । भवति यतोऽसावधमो दोष खलु दृष्टिसमोह ॥११॥
धर्मश्रवणेऽवज्ञा तत्त्वरसास्वादविमुखता चैव । धार्मिकसत्त्वासक्तिश्च धर्मपथ्येऽरुचेर्लिङ्गम् ॥ १२ ॥
सत्येतरदोषश्रुतिभावादन्तर्बहिश्च यत् स्फुरणम् । अविचार्य कार्यतत्त्व तदिह क्रोधकण्डूते ॥ १३ ॥
एते पापविकारा न प्रभवन्त्यस्य धीमतः सततम् । धर्मामृतप्रभावाद् भवन्ति मैत्र्यादयश्च गुणा ॥ १४ ॥
परहितचिन्ता मैत्री परदु खविनाशिनी तथा करुणा । परसुखतुष्टिर्मुदिता परदोषोपेक्षणमुपेक्षा ॥१५॥
एतज्जिनप्रणीत लिङ्ग खलु धर्मसिद्धिमज्जन्तो । पुण्यादिसिद्धिसिद्धे सिद्ध सद्धेतुभावेन ॥ १६ ॥

५ एवं सिद्धे धर्मे सामान्येनेह लिङ्गसंयुक्ते । नियमेन भवति पुंसां लोकोत्तरतत्त्वसम्प्राप्तिः ॥ १ ॥
आद्यं भावारोग्यं बीजं चैषा परस्य तस्यैव । अधिकारिणो नियोगाच्चरम इयं पुद्गलावर्त्ते ॥ २ ॥
स भवति कालादेव प्राधान्येन सुकृतादिभावेऽपि। ज्वरशमनौषधसमयवदिति समयविदो विदुर्निपुणम् ३
नागमवचनं तदधः सम्यक् परिणमति नियम एषोऽत्र। शमनीयमिवाभिनवे ज्वरोदयेऽकाल इतिकृत्वा ४
आगमदीपेऽध्यारोपमण्डलं तत्त्वतोऽसदेव तथा । पश्यन्त्यपवादात्मकमविषय इह मन्दधीनयनाः ॥५॥
तत एवाविधिसेवा दानादौ तत्प्रसिद्धफल एव । तत्तत्त्वदृशामेषा पापा कथमन्यथा भवति ? ॥ ६ ॥
येषामेषा तेषामागमवचनं न परिणतं सम्यक् । अमृतरसास्वादज्ञः को नाम विषे प्रवर्त्तेत ? ॥ ७ ॥
तस्माच्चरमे नियमादागमवचनमिह पुद्गलावर्त्ते। परिणमति तत्त्वतः खलु स चाधिकारी भवत्यस्याः।८।
आगमवचनपरिणतिर्भवरोगसदौषधं यदनपायम् । तदिह परः सद्बोधः सदनुष्ठानस्य हेतुरिति ॥ ९ ॥
दशसंज्ञाविष्कम्भणयोगे सत्यविकलं ह्यदो भवति। परहितनिरतस्य सदा गम्भीरोदारभावस्य ॥ १० ॥
सर्वज्ञवचनमागमवचनं यत् परिणते ततस्तस्मिन् । नासुलभमिदं सर्वं ह्युभयमलपरिक्षयात् पुंसाम् ११

विधिसेवा दानादौ सूत्रानुगता तु सा नियोगेन। गुरुपारतन्त्र्ययोगादौचित्यात्मैव सर्वत्र ॥ १२ ॥
न्यायात्त स्वल्पमपि हि भृत्यासद्रुपरोधतो महादानम्। दीनतपस्व्यादौ गुर्वनुज्ञया दानमन्यत्तु ॥ १३ ॥
देवगुणपरिज्ञानात्तद्भावानुगतमुत्तमं विधिना। स्यादादरादियुक्त यत्तद्देवार्चनं चेष्टम् ॥ १४ ॥
एव गुरुसेवादि च काले सद्योगविघ्नवर्जनया। इत्यादिकृत्यकरण लोकोत्तरतत्त्वसम्प्राप्ति ॥ १५ ॥
इतरेतरसापेक्षा ह्येषा पुनराप्तवचनपरिणत्या। भवति यथोदितनीत्या पुंसां पुण्यानुभावेन ॥ १६ ॥
६ अस्यां सत्यां नियमाद् विधिवज्जिनभवनकारणविधानम्। सिध्यति परमफलमल ह्यधिकार्यारम्भकत्वेन १
न्यायार्जितवित्तेशो मतिमान् स्फीताशय सदाचार। गुर्वादिमतो जिनभवनकारणस्याधिकारीति २
कारणविधानमेतच्छुद्धा भूमिर्दल च दार्वादि। भृतकानतिसन्धान स्वाशयवृद्धि समासेन ॥ ३ ॥
शुद्धा तु वास्तुविद्याविहिता सन्न्यायतश्च योपात्ता। न परोपतापहेतुश्च सा जिनेन्द्रैः समाख्याता॥४॥
शास्त्रबहुमानतः खलु सच्चेष्टातश्च धर्मनिष्पत्ति। परपीडात्यागेन च विपर्ययात् पापसिद्धिरिव ॥ ५ ॥
तत्रासन्नोऽपि जनोऽसम्बन्ध्यपि दानमानसत्कारैः। कुशलाशयवान् कार्यो नियमाद्बोध्यङ्गमयमस्य ।६।

दलमिष्टकादि तदपि च शुद्धं तत्कारिवर्गतः क्रीतम् । उचितक्रयेण यत्स्यादानीतं चैव विधिना तु ॥७॥
दार्वपि च शुद्धमिह यन् नानीतं देवताद्युपवनादेः । प्रगुणं सारवदभिनवमुच्चैर्ग्रन्थ्यादिरहितं च ॥८॥
सर्वत्र शकुनपूर्वं ग्रहणादावत्र वर्त्तितव्यमिति । पूर्णकलशादिरूपश्चित्तोत्साहानुगः शकुनः ॥९॥
भृतका अपि कर्त्तव्या य इह विशिष्टाः स्वभावतः केचित् । यूयमपि गोष्ठिका इह वचनेन सुखं तु ते स्थाप्याः
अतिसन्धानं चैषां कर्त्तव्यं न खलु धर्ममित्राणाम् । न व्याजादिह धर्मो भवति तु शुद्धाशयादेव ॥११॥
देवोद्देशेनैतद् गृहिणां कर्तव्यमित्यलं शुद्धः । अनिदानः खलु भावः स्वाशय इति गीयते तज्ज्ञैः ॥१२॥
प्रतिदिवसमस्य वृद्धिः कृताकृतप्रत्युपेक्षणविधानात् । एवमिदं क्रियमाणं शस्तमिह निदर्शितं समये
एतादिह भावयज्ञः सद्गृहिणो जन्मफलमिदं परमम् । अभ्युदयाव्युच्छित्त्या नियमादपवर्गबीजमिति
देयं तु न साधुभ्यस्तिष्ठन्ति यथा च ते तथा कार्यम् । अक्षयनीव्या ह्येवं ज्ञेयमिदं वंशतरकाण्डम् ॥१५॥
यतनातो न च हिंसा यस्मादेषैव तन्निवृत्तिफला । तदधिकनिवृत्तिभावाद्विहितमतोऽदुष्टमेतदिति ॥१६॥

७ जिनभवने तद्बिम्बं कारयितव्यं द्रुतं तु बुद्धिमता । साधिष्ठानं ह्येवं तद्भवनं वृद्धिमद् भवति ॥१॥

जिनबिम्बकारणविधिं काले पूजापुरस्सरं कर्तुं । विभवोचितमूल्यार्पणमनघस्य शुभेन भावेन ॥ २ ॥
नार्पणमितरस्य तथा युक्त्या वक्तव्यमेव मूल्यमिति । काले च दानमुचितं शुभभावेनैव विधिपूर्वम् ॥३॥
चित्तविनाशो नैव प्रायः सञ्जायते द्वयोरपि हि । अस्मिन् व्यतिकर एष प्रतिषिद्धो धर्मतत्त्वज्ञैः ॥४॥
एष द्वयोरपि महान् विशिष्टकार्यप्रसाधकत्वेन । सम्बन्ध इह क्षुण्णः न मिथः सन्तः प्रशंसन्ति ॥५॥
यावन्तः परितोषाः कारयितुस्तत्समुद्भवाः केचित् । तद्बिम्बकारणानीह तस्य तावन्ति तत्त्वेन ॥६॥
अप्रीतिरपि च तस्मिन् भगवति परमार्थनीतितो ज्ञेया । सर्वापायनिमित्तं ह्येषा पापा न कर्त्तव्या ॥७॥
अधिकगुणस्थैर्नियमात् कारयितव्यं स्वदौहृदैर्युक्तम् । न्यायार्जितवित्तेन तु जिनबिम्बं भावशुद्धेन ॥८॥
अत्रावस्थान्वयगामिनो बुधैर्दौहृदाः समाख्याताः । बालाद्यार्थेच्छा यत्तत्क्रीडनकादि देयमिति ॥ ९ ॥
यद्यस्य सत्कमनुचितमिह वित्ते तस्य तज्जमिह पुण्यम् । भवतु शुभाशयकरणादित्येतज्ज्ञानशुद्धं स्यात्
मन्त्रन्यासश्च तथा प्रणवनमःपूर्वकं च तन्नाम । मन्त्रः परमो ज्ञेयो मननत्राणे ह्यतो नियमात् ॥११॥
बिम्बं महत्सुरूपं कनकादिमयं च यः खलु विशेषः । नास्मात्फलं विशिष्टं भवति न तदिहाशयविशेषात् १२

आगमतन्त्रः सततं तद्वद्भक्त्यादिलिङ्गसंसिद्धः । चेष्टायां तत्स्मृतिमान् शस्तः खल्वाशयविशेषः ॥१३॥
एवंविधेन यद्बिम्बकारणं तद्वदन्ति समयविदः । लोकोत्तरमन्यदतो लौकिकमभ्युदयसारं च ॥ १४ ॥
लोकोत्तरं तु निर्वाणसाधकं परमफलमिहाश्रित्य । अभ्युदयोऽपि हि परमो भवति त्वत्रानुषङ्गेण ॥१५॥
कृषिकरण इव पलालं नियमादत्रानुषङ्गिकोऽभ्युदयः । फलमिह धान्यावाप्तिः परमं निर्वाणमिव बिम्बात्

८ निष्पन्नस्यैवं खलु जिनबिम्बस्योदिता प्रतिष्ठाऽऽशु । दशदिवसाभ्यन्तरतः सा च त्रिविधा समासेन १
व्यक्त्याख्या खल्वेका क्षेत्राख्या चापरा महाख्या च । यस्तीर्थकृद्यदा किल तस्य तदाऽऽद्येति समयविदः२
ऋषभाद्यानां तु तथा सर्वेषामेव मध्यमा ज्ञेया । सप्तत्यधिकशतस्य तु चरमेह महाप्रतिष्ठेति ॥ ३ ॥
भवति च खलु प्रतिष्ठा निजभावस्यैव देवतोद्देशात् । स्वात्मन्येव परं यत् स्थापनमिह वचननीत्योच्चैः ।४।
बीजमिदं परमं यत् परमाया एव समरसापत्तेः । स्थाप्येन तदपि मुख्या हन्तैषैवेति विज्ञेया ॥ ५ ॥
मुक्त्यादौ तत्त्वेन प्रतिष्ठिताया न देवतायास्तु । स्थाप्ये न च मुख्येयं तदधिष्ठानाद्यभावेन ॥ ६ ॥
इज्यादेर्न च तस्या उपकारः कश्चिदत्र मुख्य इति । तदतत्त्वकल्पनैषा बालक्रीडासमा भवति ॥ ७ ॥

भावरसेन्द्रात्तु ततो महोदयाज्जीवतास्व(म्र)रूपस्य। कालेन भवति परमाऽप्रतिषद्धा सिद्धकाञ्चनता ॥८॥
वचनानलक्रियातः कर्मेन्धनदाहतो यतश्चैषा। इतिकर्त्तव्यतयाऽत सफलैषाऽप्यत्र भावविधौ ॥ ९ ॥
एषा च लोकसिद्धा शिष्टजनापेक्षयाऽखिलैवेति । प्रायो नानात्व पुनरिह मन्त्रगत बुधा प्राहु ॥ १० ॥
आवाहनादि सर्व्वं वायुकुमारादिगोचर चात्र । सम्मार्जनादिसिद्धये कर्त्तव्य मन्त्रपूर्वं तु ॥ ११ ॥
न्याससमये तु सम्यक् सिद्धानुस्मरणपूर्वकमसङ्गम्। सिद्धौ तस्स्थापनमिव कर्त्तव्य स्थापन मनसा ।१२।
बीजन्यास सोऽय मुक्तो भावविनिवेशत परम॰। सकलावञ्चकयोगप्राप्तिफलोऽभ्युदयसाचिवश्च १३
लवमात्रमय नियमादुचितोचितभावशुद्धिकरणेन । क्षान्त्यादियुतैर्मैत्र्यादिसङ्गतैर्बृंहणीय इति ॥१४॥
निरपाय सिद्धार्थं स्यात्समस्यो मन्त्रराडसङ्गश्च । आनन्दो ब्रह्मरसश्चिन्त्यस्तत्त्वज्ञमुष्टिरियम् ॥१५॥
अष्टौ दिवसान् यावत् पूजाऽविच्छेदतोऽस्य कर्त्तव्या। दान च यथाविभव दातव्य सर्वसत्त्वेभ्यः ॥१६॥

९ स्नानविलेपनसुसुगन्धिपुष्पधूपादिभिः शुभैः कान्तम्। विभवानुसारतो यत् काले नियत विधानेन ।१।
अनुपकृतपरहितरतः शिवदस्त्रिदशेशपूजितो भगवान्। पूज्यो हितकामानामितिभक्त्या पूजन पूजा ।२।

ऋद्धिविशेषादन्या प्रोक्ता सर्वोपचारेति ॥ ३ ॥
पञ्चोपचारयुक्ता काचिच्चाष्टोपचारयुक्ता स्यात् । ऋद्धिविशेषादन्या प्रोक्ता सर्वोपचारेति
कर्त्तव्या बुद्धिमता प्रयुक्तसत्सिद्धियोगेन ॥ ४ ॥
न्यायार्जितेन परिशोधितेन वित्तेन निरवशेषेण । कर्त्तव्या बुद्धिमता प्रयुक्तसत्सिद्धियोगेन
आशंसारहितेन च तथा तथा भाववृद्धयोच्चैः । ५ ।
शुचिनाऽऽत्मसंयमपरं सितशुभवस्त्रेण वचनसारेण । आशंसारहितेन च तथा तथा भाववृद्धयोच्चैः
आशयविशुद्धिजनकैः संवेगपरायणैः पुण्यैः ॥ ६ ॥
पिण्डक्रियागुणगतैर्गम्भीरैर्विविधवर्णसंयुक्तैः । आशयविशुद्धिजनकैः संवेगपरायणैः पुण्यैः
अस्खलितादिगुणयुतैः स्तोत्रैश्च महामतिग्रथितैः ॥७॥
पापनिवेदनगर्भैः प्रणिधानपुरस्सरैर्विचित्रार्थैः । अस्खलितादिगुणयुतैः स्तोत्रैश्च महामतिग्रथितैः
सद्भूतगुणोत्कीर्त्तनसंवेगात् समरसापत्त्या ॥ ८ ॥
शुभभावार्थ पूजा स्तोत्रेभ्यः स च परः शुभो भवति । सद्भूतगुणोत्कीर्त्तनसंवेगात् समरसापत्त्या
या तदतिचाररहिता सा परमाऽन्ये तु समयविदः ।९।
कायादियोगसारा त्रिविधा तच्छुद्धयुपात्तवित्तेन । या तदतिचाररहिता सा परमाऽन्ये तु समयविदः
निर्वाणसाधनीति च फलदा तु यथार्थसंज्ञाभिः ।१०
विघ्नोपशमन्याद्या गीताऽभ्युदयप्रसाधनी चान्या । निर्वाणसाधनीति च फलदा तु यथार्थसंज्ञाभिः
आनयति चान्यतोऽपि हि नियमादेव द्वितीयायाम् ११
प्रवरं पुष्पादि सदा चाद्यायां सेवते तु तद्दाता । आनयति चान्यतोऽपि हि नियमादेव द्वितीयायाम्
अखिलगुणाधिकसद्योगसारसद्ब्रह्मयागपरः१२
त्रैलोक्यसुन्दरं यत् मनसाऽऽपादयति तत्तु चरमायाम् । अखिलगुणाधिकसद्योगसारसद्ब्रह्मयागपरः
कृतकृत्यश्च स भगवान् व्यर्था पूजेति मुग्धमतिः
स्नानादौ कायवधो न चोपकारो जिनस्य कश्चिदपि । कृतकृत्यश्च स भगवान् व्यर्था पूजेति मुग्धमतिः

भावरसेन्द्रात्तु ततो महोदयाज्जीवतास्व(त्र)रूपस्य। कालेन भवति परमाऽप्रतिबद्धा सिद्धकाञ्चनता ॥८॥
वचनानलक्रियातः कर्मेन्धनदाहतो यतश्चैषा। इतिकर्त्तव्यतयाऽत सफलैषाऽप्यत्र भावविधौ ॥ ९ ॥
एषा च लोकसिद्धा शिष्टजनापेक्षयाऽखिलैवेति। प्रायो नान्यास्य पुनरिह मन्त्रगत ज्ञुषा प्राहु ॥ १० ॥
आवाहनादि सर्वं वायुकुमारादिगोचर चात्र। सम्मार्जनादिसिद्ध्यै कर्त्तव्य मन्त्रपूर्वं तु ॥ ११ ॥
न्याससमये तु सम्यक् सिद्धानुस्मरणपूर्वकमसक्तम्। सिद्धौ तत्स्थापनमिव कर्त्तव्य स्थापन मनसा ।१२।
बीजन्यास सोऽय मुक्तो भावविनिवेशात परम । सकलावञ्चकयोगप्राप्तिफलोऽभ्युदयसचिवश्च १३
लवमात्रमथ निषमादुचितोचितभावशुद्धिकरणेन। क्षान्त्यादियुतैर्मैत्र्यादिसङ्गतैर्बृंहणीय इति ॥१४॥
निरपाय सिद्धार्थं स्वात्मस्थो मन्त्रराडसक्तश्च। आनन्दो ब्रह्मरसश्चिन्त्यस्तत्त्वज्ञमुष्टिरियम् ॥१५॥
अष्टौ दिवसान् यावत् पूजाऽविच्छेदतोऽस्य कर्त्तव्या। दान च यथाविभव दातव्य सर्वसत्त्वेभ्यः ॥१६॥

९ स्नानविलेपनसुसुगन्धिपुष्पधूपादिभिः शुभैः कान्तम्। विभवानुसारतो यत् काले नियत विधानेन ।१।
अनुपकृतपरहितरतः शिवदस्त्रिदशेशपूजितो भगवान्। पूज्यो हितकामानामितिभक्त्या पूजन पूजा ।२।

ऋद्धिविशेषादन्या प्रोक्ता सर्वोपचारेति ॥ ३ ॥
पञ्चोपचारयुक्ता काचिच्चाष्टोपचारयुक्ता स्यात् । ऋद्धिविशेषादन्या प्रोक्ता सर्वोपचारेति ॥ ४ ॥
न्यायार्जितेन परिशोधितेन वित्तेन निरवशेषेण । कर्त्तव्या बुद्धिमता प्रयुक्तसत्सिद्धियोगेन ॥ ५ ॥
शुचिनाऽऽत्मसंयमपरं सितशुभवस्त्रेण वचनसारेण । आशंसारहितेन च तथा तथा भाववृद्ध्योच्चैः ॥ ६ ॥
पिण्डक्रियागुणगतैर्गम्भीरैर्विविधवर्णसंयुक्तैः । आशयविशुद्धिजनकैः संवेगपरायणैः पुण्यैः ॥ ७ ॥
पापनिवेदनगर्भैः प्रणिधानपुरस्सरैर्विचित्रार्थैः । अस्खलितादिगुणयुतैः स्तोत्रैश्च महामतिग्रथितैः ॥ ८ ॥
शुभभावार्थ पूजा स्तोत्रेभ्यः स च परः शुभो भवति । सद्भूतगुणोत्कीर्त्तनसंवेगात् समरसापत्त्या ॥ ९ ॥
कायादियोगसारा त्रिविधा तच्छुद्ध्युपात्तवित्तेन । या तदतिचाररहिता सा परमाऽन्ये तु समयविदः ॥ १० ॥
विघ्नोपशमन्याद्या गीताऽभ्युदयप्रसाधनी चान्या । निर्वाणसाधनीति च फलदा तु यथार्थसंज्ञाभिः ॥ ११ ॥
प्रवरं पुष्पादि सदा चाद्यायां सेवते तु तद्दाता । आनयति चान्यतोऽपि हि नियमादेव द्वितीयायाम् ॥ १२ ॥
त्रैलोक्यसुन्दरं यत् मनसाऽऽपादयति तत्तु चरमायाम् । अखिलगुणाधिकसद्योगसारसद्ब्रह्मयागपरः
स्नानादौ कायवधो न चोपकारो जिनस्य कश्चिदपि । कृतकृत्यश्च स भगवान् व्यर्था पूजेति मुग्धमतिः

कूपोदाहरणादिह कायवधोऽपि गुणवान् मतो गृहिण । मन्त्रादेरिव च ततस्तदनुपकारेऽपि फलभाव १४
कृतकृत्यत्वादेव च तत्पूजा फलवती गुणोत्कर्षात् । तस्मादन्यार्थैवाऽऽरम्भवतोऽन्यत्र विमलधिय ॥१५॥
इति जिनपूजां धन्य शृण्वन् कुर्वंस्तदोचिता नियमात् । भवविरहकारण खलु सदनुष्ठान द्रुत लभते ।१६

१० सदनुष्ठानमतः खलु बीजन्यासात् प्रशान्तवाहितया । सञ्जायते नियोगात् पुंसां पुण्योदयसहायम् ।१।
तत्प्रीतिभक्तिवचनासङ्गोपपद चतुर्विध गीतम् । तत्त्वाभिज्ञै परमपदसाधन सर्वमेवैतत् ॥ २ ॥
यत्रादरोऽस्ति परमः प्रीतिश्च हितोदया भवति कर्तु । शेषत्यागेन करोति यच्च तत् प्रीत्यनुष्ठानम् ॥३॥
गौरवविशेषयोगाद् बुद्धिमतो यद्विशुद्धतरयोगम् । क्रिययेतरतुल्यमपि ज्ञेय तद्भक्त्यनुष्ठानम् ॥४॥
अत्यन्तवल्लभा खलु पत्नी तद्वद्धिता च जननीति । तुल्यमपि कृत्यमनयोर्ज्ञात स्यात् प्रीतिभक्तिगतम् ॥५॥
वचनात्मिका प्रवृत्ति सर्वत्रौचित्ययोगतो या तु । वचनानुष्ठानमिद चारित्रवतो नियोगेन ॥ ६ ॥
यत्त्वभ्यासातिशयात् सात्मीभूतमेव चेष्ट्यते सद्भिः । तदसङ्गानुष्ठान भवति त्वेतत्तदावेधात् ॥ ७ ॥
चक्रभ्रमण दण्डात् तदभावे चैव यत् पर भवति । वचनासङ्गानुष्ठानयोस्तु तज्ज्ञापक ज्ञेयम् ॥ ८ ॥

एतदनुष्ठानानां विज्ञेये इह गतापाये ॥ ९ ॥
अभ्युदयफले चाद्ये निःश्रेयससाधने तथा चरमे । आद्यद्वये त्रिभेदा चरमद्वितये द्विभेदेति ॥ १० ॥
उपकार्यपकारिविपाकवचनधर्मोत्तरा मता क्षान्तिः । आद्यत्रये त्वमी स्युः स्थूलाश्च तथा घनाश्चैव ।११
चरमाद्यायां सूक्ष्मा अतिचाराः प्रायशोऽतिविरलाश्च । ज्ञाने परे यथार्हं गुरुभक्तिविधानसाङ्गिके ॥ १२ ॥
श्रुतमयमात्रापोहाच्चिन्तामयभावनामये भवतः । विधियत्नवत्तु गुरुभिर्विषयतृडपहारि नियमेन ।१३।
उदकपयोऽमृतकल्पं पुंसां सज्ज्ञानमेवमाख्यातम् । प्राप्नोति न संवेगं तदाऽपि यः सोऽचिकित्स्य इति १४
शृण्वन्नपि सिद्धान्तं विषयपिपासातिरेकतः पापः । कुर्वन्नेतद् गुरुरपि तदधिकदोषोऽवगन्तव्यः ॥ १५ ॥
नैवंविधस्य शस्तं मण्डल्युपवेशनप्रदानमपि । गुरुभक्त्यादिविधानात् कारणमेतद् द्वयस्येष्टम्। १६।
यः शृण्वन् संवेगं गच्छति तस्याद्यमिह मतं ज्ञानम् । तदभावेऽपि श्रावणमासिराऽवनिकूपखननसमम् ॥१॥
११ शुश्रूषा चेहाद्यं लिङ्गं खलु वर्णयन्ति विद्वांसः । परमाच्छ्रवणादिसिद्धिफला ॥ २ ॥
शुश्रूषाऽपि द्विविधा परमेतरभेदतो बुधैरुक्ता। परमा क्षयोपशमतः किन्नरगेयश्रवणादधिको धर्मश्रुतौ रागः ॥ ३ ॥
यूनो वैदग्ध्यवतः कान्तायुक्तस्य कामिनोऽपि दृढम् ।

गुरुभक्तिः परमाऽस्यां विधौ प्रयत्नस्तथाऽऽहति करणे। सद्ग्रन्थास्ति श्रवण तत्त्वाभिनिवेशपरमफलम् ४
विपरीता त्वितरा स्यात् प्रायोऽनर्थाय देहिनां सा तु। या सुतनृपकथानकशुश्रूषावत् स्थिता लोके ।५।
ऊहादिरहितमाद्य तद्युक्त मध्यम भवेज्ज्ञानम्। चरम हितकरणफल विपर्ययो मोहतोऽन्य इति ॥६॥
वाक्यार्थमात्रविषय कोष्ठकगतबीजसन्निभ ज्ञानम्। श्रुतमयमिह विज्ञेय मिथ्याऽभिनिवेशरहितमलम् ७
यत्तु महावाक्यार्थजमतिसूक्ष्मसुयुक्तिचिन्तयोपेतम्। उदक इव तैलबिन्दुर्विसर्पि चिन्तामय तत्स्यात् ८
ऐदम्पर्य्यगत यद्विध्यादौ यत्नवत्तथैवोच्चैः। एतत्तु भावनामयमशुद्धसद्रत्नदीप्तिसमम् ॥ ९ ॥
आद्य इह मनाक्पुंसस्तद्रागाद्दर्शनग्रहो भवति। न भवत्यसौ द्वितीये चिन्तायोगात् कदाचिदपि॥१०॥
चारिचरकसञ्जीव(वि)न्यचरकचारणविधानतश्चरमे। सर्वत्र हिता वृत्तिर्गाम्भीर्यात्समरसापत्त्या ॥११॥
गुर्वादिविनयरहितस्य यस्तु मिथ्यात्वदोषतो वचनात्। दीप इव मण्डलगतो बोध स विपर्ययः पापः १२
दण्डीखण्डनिवसन भस्मादिविभूषित सतां शोच्यम्। पश्यत्यात्मानमल ग्रही नरेन्द्रादपि ह्यधिकम् १३
मोहविकारसमेत पश्यत्यात्मानमेवमकृतार्थम्। तद्व्यत्ययलिङ्गरत कृतार्थमिति तद्ग्रहादेव ॥ १४ ॥

सोऽपूर्वकरणतः स्याज्ज्ञेयं लोकोत्तरं तच्च । १५ ।
सम्यग्दर्शनयोगाज्ज्ञानं तद् ग्रन्थिभेदतः परमम् । औचित्यवतो ज्ञानं शेषस्य विपर्ययो ज्ञेयः ॥१६॥
लोकोत्तरस्य तस्मान्महानुभावस्य शान्तचित्तस्य । इतरस्य पुनर्दीक्षा वसन्तनृपसन्निभा ज्ञेया१

१२ अस्मिन्सति दीक्षाया अधिकारी तत्त्वतो भवति सत्त्वः । यथोदितस्यैव साध्वीति ॥२॥
श्रेयोदानादशिवक्षपणाच्च सतां मतेह दीक्षेति । सा ज्ञानिनो नियोगाद् सोऽपि ज्ञान्येव तत्फलतः३
यो निरनुबन्धदोषाच्छ्राद्धोऽनाभोगवान् वृजिनभीरुः । गुरुभक्तो ग्रहरहितः युगपदेव ॥ ४ ॥
चक्षुष्मानेकः स्यादन्धोऽन्यस्तन्मतानुवृत्तिपरः । गन्तारौ गन्तव्यं प्राप्नुत एतौ सोऽपि किल५
यस्यास्ति सत्क्रियायामित्थं सामर्थ्ययोग्यताऽविकला । गुरुभावप्रतिबन्धाद्दीक्षोचित एव ऽत्यन्तम् ॥६॥
देयाऽस्मै विधिपूर्वं सम्यक्तन्त्रानुसारतो दीक्षा । निर्वाणबीजमेषेत्यनिष्टफलदाऽन्यथा स्वगुरुयोजनतः ॥७॥
देशसमग्राख्येयं विरतिर्न्यासोऽत्र तद्वति च सम्यक् । तन्नामादिस्थापनमविद्रुतं तदुपचारः ॥८॥
नामनिमित्तं तत्त्वं तथा तथा चोद्धृतं पुरा यदिह । तत्स्थापना तु दीक्षा तत्त्वेनान्यस्तत्तेषु यतितव्यम् ॥९॥
कीर्त्यारोग्यध्रुवपदसम्प्राप्तेः सूचकानि नियमेन । नामादीन्याचार्या वदन्ति तत्

तत्संस्कारादेषा दीक्षा सम्पद्यते महापुंसः । पापविषापगमात् खलु सम्यग्गुरुधारणायोगात् ॥ १० ॥
सम्प्रज्ञायां चास्यां लिङ्गं व्यावर्णयन्ति समयविदः । धर्मैकनिष्ठतैव हि शेषत्यागेन विधिपूर्वम् ॥ ११ ॥
वचनक्षान्तिरिहादौ धर्मक्षान्त्यादिसाधनं भवति । शुद्धं च तपो नियमाध्यमश्च सत्यं च शौचं च ॥ १२ ॥
आकिञ्चन्यं मुख्यं ब्रह्मापि परं सदागमविशुद्धम् । सर्वं शुक्लमिदं खलु नियमात्संवत्सरादूर्ध्वम् ॥ १३ ॥
ध्यानाध्ययनाभिरतिः प्रथमं पश्चात्तु भवति तन्मयता । सूक्ष्मार्थालोचनया संवेगः स्पर्शयोगश्च ॥ १४ ॥
स्पर्शस्तत्त्वाप्तिः संवेदनमात्रमविदितं त्वन्यत् । वन्ध्यमपि स्यादेतत्स्पर्शस्त्वक्षेपतत्फलदः ॥ १५ ॥
व्याध्यभिभूतो यद्वत्किश्चिण्णस्तेन तत्क्रियां यत्नात् । सम्यक्करोति तद्वद्दीक्षित इव साधुसच्चेष्टाम् ॥१६॥
१३ गुरुविनयः स्वाध्यायो योगाभ्यासः परार्थकरणं च । इतिकर्तव्यतया सह विज्ञेया साधुसच्चेष्टा ॥१॥
औचित्याद् गुरुवृत्तिर्बहुमानस्तत्कृतज्ञताचित्तम् । आज्ञायोगस्तत्सत्यकरणता चेति गुरुविनयः ॥ २ ॥
यत्तु खलु वाचनादेरासेवनमत्र भवति विधिपूर्वम् । धर्मकथान्तः क्रमशस्तत्स्वाध्यायो विनिर्दिष्टः ॥ ३ ॥
स्थानोर्णार्थालम्बनतदन्ययोगपरिभावनं सम्यक् । परतत्त्वयोजनमलं योगाभ्यास इति तत्त्वविदः ॥४॥

विहितानुष्ठानपरस्य तत्त्वतो योगशुद्धिसचिवस्य । भिक्षाटनादि सर्वं परार्थकरणं यतेर्ज्ञेयम् ॥ ५ ॥
सर्वत्रानाकुलता यतिभावाव्ययपरा समासेन । कालादिग्रहणविधौ क्रियेतिकर्त्तव्यता भवति ॥ ६ ॥
इति चेष्टावत उच्चैर्विशुद्धभावस्य सद्यतेः क्षिप्रम्। मैत्रीकरुणामुदितोपेक्षाः किल सिद्धिमुपयान्ति ॥७॥
एताश्चतुर्विधाः खलु भवन्ति सामान्यतश्चतस्रोऽपि । एतद्भावपरिणतावन्ते मुक्तिर्न तत्रैताः ॥ ८ ॥
उपकारिस्वजनेतरसामान्यगता चतुर्विधा मैत्री । मोहाऽसुखसंवेगाऽन्यहितयुता चैव करुणेति ॥ ९ ॥
सुखमात्रे सद्धेतावनुबन्धयुते परे च मुदिता तु । करुणानुबन्धनिर्वेदतत्त्वसारा ह्युपेक्षेति ॥ १० ॥
एताः खल्वाभ्यासात् क्रमेण वचनानुसारिणां पुंसाम्। सद्वृत्तानां सततं श्राद्धानां परिणमन्त्युच्चैः ॥११॥
एतद्रहितं तु तथा तत्त्वाभ्यासात्परार्थकार्येव । सद्बोधमात्रमेव हि चित्तं निष्पन्नयोगानाम् ॥ १२ ॥
अभ्यासोऽपि प्रायः प्रभूतजन्मानुगो भवति शुद्धः । कुलयोग्यादीनामिह तन्मूलाधानयुक्तानाम् ॥१३॥
अविराधनया यतते यस्तस्यायमिह सिद्धिमुपयाति। गुरुविनयः श्रुतगर्भो मूलं चास्या अपि ज्ञेयः॥१४॥
सिद्धान्तकथा सत्सङ्गमश्च मृत्युपरिभावनं चैव । दुष्कृतसुकृतविपाकालोचनमथ मूलमस्यापि ॥१५॥

एतस्मिन् खलु यत्नो विदुपा सम्यक् सदैव कर्त्तव्य ।आमूलमिद परम सर्व्वस्य हि योगमार्ग्गस्य ॥१६॥

१४ सालम्बनो निरालम्बनश्च योग परो द्विधा ज्ञेय । जिनरूपध्यान खल्वाद्यस्तत्तत्त्वगस्त्वपर ॥१॥

अष्टपृथग्जनचित्तत्यागाद्योगिकुलचित्तयोगेन। जिनरूप ध्यातव्य योगविधावन्यथा दोष ॥ २ ॥

खेदोद्वेगक्षेपोत्थानभ्रान्त्यन्यमुद्रुगासङ्गै । युक्तानि हि चित्तानि प्रबन्धतो वर्जयेन्मतिमान् ॥ ३ ॥

खेदे दार्ढ्याभावान्न प्रणिधानमिह सुन्दर भवति। एतच्चेह प्रवर कृषिकर्मणि सलिलवज्ज्ञेयम् ॥ ४ ॥

उद्वेगे विद्वेषाद्विष्टिसम करणमस्य पापेन । योगिकुलजन्मबाधकमलमेतत्तद्विदामिष्टम् ॥ ५ ॥

क्षेपेऽपि चाप्रबन्धादिष्टफलसमृद्धये न जात्वेतत् । नाऽसकृदुत्पाटनत शालिरपि फलावह पुस ॥६॥

उत्थाने निर्वेदात् करणमकरणोदय सदैवास्य । अत्यागत्यागोचितमेतत्तु स्वसमयेऽपि मतम् ॥ ७ ॥

भ्रान्तौ विभ्रमयोगान्न हि सस्कार कृतेतरादिगत । तदभावे तत्करण प्रक्रान्तविरोध्यनिष्टफलम् ॥८॥

अन्यमुदि तत्र रागात् तदनादरताऽर्थतो महापाया । सर्वानर्थनिमित्त मुद्विषयाङ्गारवृष्ट्याभा ॥ ९ ॥

रुजि निजजात्युच्छेदात् करणमपि हि नेष्टसिद्धये नियमात् । अस्येत्यननुष्ठान तेनैतद्वन्ध्यफलमेव ।१०

आसङ्गेऽप्यविधानादसङ्गसत्त्युचितामित्यफलमेतत् । भवतीष्टफलमुच्चैस्तदप्यसङ्गं यतः परमम् ॥११॥
एतद्दोषविमुक्तं शान्तोदात्तादिभावसंयुक्तम् । सततं परार्थनियतं सङ्क्लेशविवर्जितं चैव ॥ १२ ॥
सुस्वप्नदर्शनपरं समुल्लसद्गुणगणौघमत्यन्तम् । कल्पतरुबीजकल्पं शुभोदयं योगिनां चित्तम् ॥ १३ ॥
एवंविधमिह चित्तं भवति प्रायः प्रवृत्तचक्रस्य । ध्यानमपि शस्तमस्य त्वधिकृतमित्याहुराचार्याः॥१४॥
शुद्धे विविक्तदेशे सम्यक्संयमितकाययोगस्य । कायोत्सर्गेण दृढं यद्वा पर्यङ्कबन्धेन ॥ १५ ॥
साध्वागमानुसाराच्चेतो विन्यस्य भगवति विशुद्धम् । स्पर्शविधात्तात्सिद्धयोगिसंस्मरणयोगेन ॥ १६ ॥

१५ सर्वजगद्धितमनुपममतिशयसन्दोहमृद्धिसंयुक्तम् । ध्येयं जिनेन्द्ररूपं सदसि गदत्तत्परं चैव ॥१॥
सिंहासनोपविष्टं छत्रत्रयकल्पपादपस्याधः । सत्त्वार्थसम्प्रवृत्तं देशनया कान्तमत्यन्तम् ॥ २ ॥
आधीनां परमौषधमव्याहतमखिलसम्पदां बीजम् । चक्रादिलक्षणयुतं सर्वोत्तमपुण्यनिर्म्माणम् ॥३॥
निर्वाणसाधनं भुवि भव्यानामग्र्यमतुलमाहात्म्यम् । सुरसिद्धयोगिवन्द्यं वरेण्यशब्दाभिधेयं च ॥४॥
परिणत एतास्मिन् सति सद्ध्याने क्षीणकिल्बिषो जीवः । निर्वाणपदासन्नः शुक्लाभोगो विगतमोहः ५

चरमावञ्चकयोगात् प्रातिभसञ्जाततत्त्वसद्दृष्टिः । इदमपर तत्त्व तथ्यप्रशातस्त्वस्यतोऽप्यन्यत् ॥ ६ ॥
तस्मिन् दृष्टे दृष्ट सत्र भूत तत् पर मत ब्रह्म । तद्योगादस्यापि ह्येषा त्रैलोक्यसुन्दरता ॥ ७ ॥
सामर्थ्ययोगतो या तत्र दिदृक्षेत्यसङ्गसक्त्याख्या । साऽनालम्बनयोग प्रोक्तस्तद्दर्शन यावत् ॥८॥
तत्राप्रतिष्ठितोऽयं यतः प्रवृत्तश्च तत्त्वतस्तत्र । सर्वोत्तमानुजः खलु तेनानालम्बनो गीतः ॥ ९ ॥
द्रागस्माच्चदर्शनमिषुपातज्ञातमात्रतो ज्ञेयम् । एतच्च केवल तज् ज्ञान यत्तत्पर ज्योति ॥ १० ॥
आत्मस्थ त्रैलोक्यप्रकाशक निष्क्रिय परानन्दम् । तीतादिपरिच्छेदकममलं ध्रुव चेति समयज्ञा ॥११॥
एतद्योगफल तत्परापर दृश्यते परमनेन । तत्तत्त्व यद् दृष्ट्वा निवर्तते दर्शनाकाङ्क्षा ॥ १२ ॥
तनुकरणादिविरहित तच्चाचिन्त्यगुणसमुदय सूक्ष्मम् । त्रैलोक्यमस्तकस्थ निवृत्तजन्मादिसङ्क्लेशम् १३
ज्योति· पर परस्तात्तमसो यद्गीयते महामुनिभि । आदित्यवर्णममल ब्रह्माद्यैरक्षर ब्रह्म ॥ १४ ॥
नित्य प्रकृतिवियुक्त लोकालोकावलोकनाभोगम् । स्तिमिततरङ्गोदधिसममवर्णमस्पर्शमगुरुलघु ।१५।
सर्वाबाधारहितं परमानन्दसुखसङ्गतमसङ्गम् । नि शेषकलातीत सदाशिवाद्यादिपदवाच्यम् ॥ १६ ॥

१६ एतद् दृष्ट्वा तत्त्वं परममनेनैव समरसापत्तिः। सञ्जायतेऽस्य परमा परमानन्द इति यामाहुः॥ १॥
सैषाऽविद्यारहिताऽवस्था परमात्मशब्दवाच्येति । एषैव च विज्ञेया रागादिविवर्जिता तथता ॥ २ ॥
वैशेषिकगुणरहितः पुरुषोऽस्यामेव भवति तत्त्वेन । विध्यातदीपकल्पस्य हन्त जात्यन्तराप्राप्तेः ॥३॥
एवं पशुत्वविगमो दुःखान्तो भूतविगम इत्यादि । अन्यदपि तन्त्रसिद्धं सर्वमवस्थान्तरेऽत्रैव ॥ ४ ॥
परिणामिन्यात्मनि सति तत्तद्ध्वनिवाच्यमेतदखिलं स्यात्। अर्थान्तरे च तत्त्वेऽविद्यादौ वस्तुसत्येव ॥५॥
तद्योगयोग्यतायां चित्रायां चैव नान्यथा नियमात् । परिभावनीयमेतद्विद्वद्भिस्तत्त्वदृष्टयोच्चैः ॥ ६ ॥
पुरुषाद्वैतं तु यदा भवति विशिष्टमथ च बोधमात्रं वा। भवभवविगमविभेदस्तदा कथं युज्यते मुख्यः? ७
अग्निजलभूमयो यत्परितापकरा भवेऽनुभवसिद्धाः । रागादयश्च रौद्रा असत्प्रवृत्त्यास्पदं लोके ॥ ८॥
परिकल्पिता यदि ततो न सन्ति तत्त्वेन कथममी स्युरिति। तन्मात्र एव तत्त्वे भवभवविगमौ कथं युक्तौ ॥९
परिकल्पना(ल्पिता)पि चैषा हन्त विकल्पात्मिका न सम्भवति।तन्मात्र एव तत्त्वे यदि वाऽभावो न जात्वस्याः
तस्माद्यथोक्तमेतत् त्रितयं नियमेन धीधनैः पुम्भिः। भवभवविगमनिबन्धनमालोच्यं शान्तचेतोभिः ११

पेदम्पर्यं शुद्धयति यत्रासावागमः सुपरिशुद्ध । तदभावे तद्देश कश्चिस्स्यादन्यथाग्रहणात् ॥ १२ ॥
तत्रापि च न द्वेष' कार्यो विषयस्तु यत्नतो मृग्य' । तस्यापि न सद्वचन सर्वं यत्प्रवचनादन्यत् ॥ १३ ॥
अद्वेषो जिज्ञासा शुश्रूषा श्रवणबोधमीमांसाः । परिशुद्धा प्रतिपत्ति प्रवृत्तिरष्टाङ्गिकी तत्त्वे ॥ १४ ॥
गर्भार्थं स्वल्वेषां भावानां यत्नतः समालोच्य । पुंसा प्रवर्त्तितव्य कुशले न्याय सतामेष ॥ १५ ॥
एते प्रवचनत स्वलु समुद्धृता मन्दमतिहितार्थं तु । आत्मानुस्मरणाय च भावा भवविरहसिद्धिफलाः १६
धर्मश्रवणे यत्न सतत कार्यो बहुश्रुतसमीपे । हितकाङ्क्षिभिर्नृसिंहैर्वचन ननु हारिभद्रमिदम् ॥ १७ ॥

१ धर्मपरिक्षाषोडशकम् ॥ २ देशनाषो० ॥ ३ धर्मलक्षणषो० ॥ ४ धर्मेच्छुलिङ्गषो० ॥ ५ लोकोत्तरतत्त्व प्राप्तिषो० ॥ ६ जिनमन्दिरनिर्माणषो० ॥ ७ जिनबिम्बनिर्माणषो० ॥ ८ प्रतिष्ठाषो० ॥ ९ पूजास्वरूपषो० ॥ १० पूजाफलषो० ॥ ११ श्रुतज्ञानलिङ्गषो० ॥ १२ दीक्षाधिकारिषो० ॥ १३ गुरुविनयषो० ॥ १४ योगभेदषो० ॥ १५ ध्येयस्वरूपषो० ॥ १६ समरसषो० ॥

॥ षोडशकनामक प्रकरण सम्पूर्णम् ॥

# ॥ अथ शास्त्रवार्तासमुच्चयः ॥४॥

प्रणम्य परमात्मानं वक्ष्यामि हितकाम्यया । सत्त्वानामल्पबुद्धीनां शास्त्रवार्तासमुच्चयम् ॥ १ ॥

यं श्रुत्वा सर्वशास्त्रेषु प्रायस्तत्त्वविनिश्चयः । जायते द्वेषशमनः स्वर्गसिद्धिसुखावहः ॥ २ ॥

दुःखं पापात्सुखं धर्मात्सर्वशास्त्रेषु संस्थितिः । न कर्त्तव्यमतः पापं कर्तव्यो धर्मसञ्चयः ॥ ३ ॥

हिंसानृतादयः पञ्च तत्त्वाश्रद्धानमेव च । क्रोधादयश्च चत्वार इति पापस्य हेतवः ॥ ४ ॥

विपरीतास्तु धर्मस्य एत एवोदिता बुधैः । एतेषु सततं यत्नः सम्यक्कार्यः सुखैषिणा ॥ ५ ॥

साधुसेवा सदा भक्त्या मैत्री सत्त्वेषु भावतः। आत्मीयग्रहमोक्षश्च धर्महेतुप्रसाधनम् ॥ ६ ॥

उपदेशः शुभो नित्यं दर्शनं धर्मचारिणाम् । स्थाने विनय इत्येतत्साधुसेवाफलं महत् ॥ ७ ॥

मैत्रीं भावयतो नित्यं शुभो भावः प्रजायते । ततो भावोदकाज्जन्तोर्द्वेषाग्निरुपशाम्यति ॥ ८ ॥

अशेषदोषजननी निःशेषगुणघातिनी । आत्मीयग्रहमोक्षेण तृष्णापि विनिवर्तते ॥ ९ ॥

एव गुणगणोपेतो विशुद्धात्मा स्थिराशयः। तत्त्वविद्भि समाख्यात सम्यग्धर्मस्य साधक ॥ १० ॥
उपादेयश्च ससारे धर्म एव बुधै सदा। विशुद्धो मुक्तये सर्वं यतोऽन्यद् स्वकारणम् ॥ ११ ॥
अनित्य प्रियसयोग इहेर्ष्याशोकवत्सलः। अनित्य यौवन चापि कुत्सिताचरणास्पदम् ॥ १२ ॥
अनित्या सम्पदस्तीव्रक्लेशवर्गसमुद्भवा। अनित्य जीवित चेह सर्वभावनिबन्धनम् ॥ १३ ॥
पुनर्जन्म पुनर्मृत्युर्हीनादिस्थानसश्रय। पुन पुनश्च यदत सुखमत्र न विद्यते ॥ १४ ॥
प्रकृत्यसुन्दर ह्येव ससारे सर्वमेव यत्। अतोऽत्र वद किं युक्ता क्वचिदास्था विवेकिनाम् ॥ १५ ॥
मुक्त्वा धर्मं जगद्वन्द्यमकलङ्क सनातनम्। परार्थसाधक धीरै सेवित शीलशालिभि ॥ युग्मम् ॥१६॥
आह तत्रापि नो युक्ता यदि सम्यङ्निरूप्यते। धर्मस्यापि शुभो यस्माद्बन्ध एव फल मतम् ॥ १७ ॥
न चाऽऽयसस्य बन्धस्य तथा हेममयस्य च। फले कश्चिद्विशेषोऽस्ति पारतन्त्र्याविशेषतः ॥ १८ ॥
तस्मादधर्मवत्त्याज्यो धर्मोऽप्येष मुमुक्षुभिः। धर्माधर्मक्षयान्मुक्तिर्मुनिभिर्वर्णिता यतः ॥ १९ ॥
उच्यत एवमेवैतत् किन्तु धर्मो द्विधा मत। सज्ज्ञानयोग एवैकस्तथान्य पुण्यलक्षण ॥ २० ॥

ज्ञानयोगस्तपः शुद्धमाशंसादोषवर्जितम् । अभ्यासातिशयादुक्तं तद्विमुक्तेः प्रसाधकम् ॥ २१ ॥
धर्मस्तदपि चेत्सत्यं किं न बन्धफलः स यत् । आशंसावर्जितोऽन्योऽपि किं नैवं चेन्न यत्तथा ॥ २२ ॥
भोगमुक्तिफलो धर्मः स प्रवृत्तीतरात्मकः । सम्यङ्मिथ्यादिरूपश्च गीतस्तन्त्रान्तरेष्वपि ॥ २३ ॥
तमन्तरेण तु तयोः क्षयः केन प्रसाध्यते । सदा स्यान्न कदाचिद्वा यद्यहेतुक एव सः ॥ २४ ॥
तस्मादवश्यमेष्टव्यः कश्चिद्धेतुस्तयोः क्षये । स एव धर्मो विज्ञेयः शुद्धो मुक्तिफलप्रदः ॥ २५ ॥
धर्माधर्मक्षयान्मुक्तिर्यच्चोक्तं मुक्तिलक्षणम् । हेयं धर्मं तदाश्रित्य न तु संज्ञानयोगकम् ॥ २६ ॥
अतस्तत्रैव युक्तास्था यदि सम्यङ् निरूप्यते । संसारे सर्वमेवान्यद्दर्शितं दुःखकारणम् ॥ २७ ॥
तस्माच्च जायते मुक्तिर्यथा मृत्यादिवर्जिता । तथोपरिष्टाद्वक्ष्यामः सम्यक्शास्त्रानुसारतः ॥ २८ ॥
इदानीं तु समासेन शास्त्रसम्यक्त्वमुच्यते । कुवादियुक्त्यपव्याख्यानिरासेनाविरोधतः ॥ २९ ॥
पृथिव्यादिमहाभूतमात्रकार्यमिदं जगत् । न चात्मादृष्टसद्भावं मन्यन्ते भूतवादिनः ॥ ३० ॥
अचेतनानि भूतानि न तद्धर्मो न तत्फलम् । चेतनास्ति च यस्येयं स एवात्मेति चापरे ॥ ३१ ॥

यदीय भूतधर्मः स्यात्तस्त्येकं तेषु सर्वदा । उपलभ्येत सत्त्वादिकठिनत्वादयो यथा ॥ ३२ ॥
शक्तिरूपेण सा तेषु सदाऽतो नोपलभ्यते । न च तेनापि रूपेण सत्यसत्येव चेन्न तत् ॥ ३३ ॥
शक्तिचेतनयोरैक्यं नानात्वं वाऽथ सर्वथा । ऐक्ये सा चेतनैवेति नानात्वेऽन्यस्य सा यत ॥ ३४ ॥
अनभिव्यक्तिरप्यस्या न्यायतो नोपपद्यते । आवृतिर्न यदन्येन तत्त्वसङ्ख्याविरोधत ॥ ३५ ॥
न चासौ तत्स्वरूपेण तेषामन्यतरेण वा । व्यञ्जकत्वप्रतिज्ञानाद्धावृतिर्व्यञ्जक यतः ॥ ३६ ॥
विशिष्टपरिणामाभावेऽपि तत्त्रावृतिर्न वै । भावताश्चेत्तया नाम व्यञ्जकत्वप्रसङ्गत ॥ ३७ ॥
न चासौ भूताभिन्नो यत्ततो व्यक्ति सदा भवेत्। भेदे त्वाधिकभावेन तत्त्वसङ्ख्या न युज्यते ॥ ३८ ॥
स्वकालेऽभिन्न इत्येव कालाभावे न सङ्गतम्। लोकसिद्धाश्रये त्वात्मा हन्त नाश्रीयते कथम् ॥ ३९ ॥
नात्मापि लोके नो सिद्धो जातिस्मरणसंश्रयात् । सर्वेषां तदभावश्च चित्रकर्मविपाकत ॥ ४० ॥
लोकेऽपि नैकत स्थानादागतानां तथेक्ष्यते । अविशेषेण सर्वेषामनुभूतार्थसंस्मृति ॥ ४१ ॥
दिव्यदर्शनतश्चैव तच्छिष्टाव्यभिचारत । पितृकर्मादिसिद्धेश्च हन्त नाऽऽत्माप्यलौकिक ॥ ४२ ॥

काठिन्याबोधरूपाणि भूतान्यध्यक्षसिद्धितः । चेतना तु न तद्रूपा सा कथं तत्फलं भवेत् ॥ ४३ ॥

प्रत्येकमसती तेषु न च स्याद्रेणुतैलवत् । सती चेदुपलभ्येत भिन्नरूपेषु सर्वदा ॥ ४४ ॥

असत्स्थूलत्वमणवादौ घटादौ दृश्यते यथा । तथा सत्येव भूतेषु चेतनापीति चेन्मतिः ॥ ४५ ॥

नासत्स्थूलत्वमणवादौ तेभ्य एव तदुद्भवात् । असतस्तत्समुत्पादो न युक्तोऽतिप्रसङ्गतः ॥ ४६ ॥

पञ्चमस्यापि भूतस्य तेभ्योऽसत्त्वाविशेषतः । भवेदुत्पत्तिरेवं च तत्त्वसङ्ख्या न युज्यते ॥ ४७ ॥

तज्जननस्वभावा नेत्यत्र मानं न विद्यते । स्थूलत्वोत्पाद इष्टश्चेत्तत्सद्भावेऽप्यसौ समः ॥ ४८ ॥

न च मूर्त्ताणुसङ्घातभिन्नं स्थूलत्वमित्यदः । तेषामेव तथा भावो न्याय्यं मानाविरोधतः ॥ ४९ ॥

भेदे तद्दलं यस्मात् कथं सद्भावमश्नुते । तद्भावेऽपि तद्भावे सदा सर्वत्र वा भवेत् ॥ ५० ॥

न चैवं भूतसङ्घातमात्रं चैतन्यमिष्यते । अविशेषेण सर्वत्र तद्वत्तद्भावसङ्गतेः ॥ ५१ ॥

एवं सति घटादीनां व्यक्तचैतन्यभावतः । पुरुषाद्य(न्न)विशेषः स्यात्स च प्रत्यक्षबाधितः ॥ ५२ ॥

अथ भिन्नस्वभावानि भूतान्येव यतस्ततः । तत्सङ्घातेषु चैतन्यं न सर्वेष्वेतदप्यसत् ॥ ५३ ॥

स्वभावो भूतमात्रत्वे सति न्यायान्न भिद्यते । विशेषण विना यस्मान्न तुल्यानां विशिष्टता ॥ ५४ ॥
स्वरूपमात्रभेदे च भेदो भूतेतरात्मक । अन्यभेदकभावे तु स एवात्मा प्रसज्यते ॥ ५५ ॥
हविर्गुडकणिकादिद्रव्यसङ्घातजान्यपि । यथा भिन्नस्वभावानि स्वाथकानि तथेति चेत् ॥ ५६ ॥
व्यक्तिमात्रत एवैषां न तु भिन्नस्वभावता । रसवीर्यविपाकादिकार्यभेदो न विद्यते ॥ ५७ ॥
तदात्मकस्वभावत्वे सस्थानादिविलक्षणा । यथेयमस्ति भूतानां तथा सापि कथ न चेत् ॥ ५८ ॥
कर्मभावात्तथा देशकालभेदाद्ययोगत । न वा सिद्धमदो भूतमात्रत्वे तदसम्भवात् ॥ ५९ ॥
तथा च भूतमात्रत्वे न तत्सङ्घातभेदयो । भेदकाभावतो भेदो युक्त सम्यग्विचिन्त्यताम् ॥ ६० ॥
एकस्तथा परो नेति तन्मात्रत्वे तथाविध । यतस्तदपि नो भिन्न ततस्तुल्य च तत्तयो ॥ ६१ ॥
स्यादेतद्भूतजत्वेऽपि भावादीनां विचित्रता । लोकसिद्धेति सिद्धैव न सा तन्मात्रजा न तु ॥ ६२ ॥
अदृष्टाकाशकालादिसामग्रीत समुद्भवात् । तथैव लोकसंसिद्धेरन्यथा तदभावत ॥ ६३ ॥
न चेह लौकिको मार्ग स्थितोऽस्माभिर्विचार्यते । किन्त्वय युज्यते केति त्वन्नीतो चोक्तवस्न सः ॥ ६४ ॥

मृतदेहे च चैतन्यमुपलभ्येत सर्वथा । देहधर्मादिभावेन तन्न धर्मादि नान्यथा ॥ ६५ ॥
न च लावण्यकार्कश्यश्यामत्वैर्व्यभिचारिता । मृतदेहेऽपि सद्भावादध्यक्षेणैव सङ्गतेः ॥ ६६ ॥
न चेल्लावण्यसद्भावो न स तन्मात्रहेतुकः । अत एवान्यसद्भावादस्त्यात्मेति व्यवस्थितम् ॥ ६७ ॥
न प्राणादिरसौ मानं किं तद्भावेऽपि तुल्यता । तदभावादभावश्चेदात्माभावे न का प्रमा ॥ ६८ ॥
तेन तद्भावभावित्वं न भूयो नलिकादिना । सम्पादितेऽप्यतत्सिद्धेः सोऽन्य एवेति चेन्न तत् ॥ ६९ ॥
वायुसामान्यसंसिद्धेस्तत्स्वभावः स नेति चेत् । अत्रापि न प्रमाणं वश्चैतन्योत्पत्तिरेव चेत् ॥ ७० ॥
न तस्यासेव सन्देहात्तवायं केन नेति चेत् । तत्तत्स्वरूपभावेन तदभावः कथं नु चेत् ॥ ७१ ॥
तद्वैलक्षण्यसंवित्तेर्मातृचैतन्यजे ह्ययम् । सुते तस्मिन्न दोषः स्यान्न न भावेऽस्य मातरि ॥ ७२ ॥
न च संस्वेदजाद्येषु मात्रभावे न तद् भवेत् । प्रदीपज्ञातमप्यत्र निमित्तत्वान्न बाधकम् ॥ ७३ ॥
इत्थं न तदुपादानं युज्यते तत्कथञ्चन । अन्योपादानभावे च तदेवात्मा प्रसज्यते ॥ ७४ ॥
न तथा भाविनं हेतुमन्तरेणोपजायते । किञ्चिन्नश्यति चैकान्ताद्यथाह व्यासमहर्षिः ॥ ७५ ॥

नासतो विद्यते भावो नाभावो विद्यते सत । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ ७६ ॥
नाभावो भावमाप्नोति शशशृङ्गे तथागते । भावो नाभावमेतीह दीपश्चेन्न स सर्वथा ॥ ७७ ॥
एव चैतन्यवानात्मा सिद्ध सततभावत । परलोक्यपि विज्ञेयो युक्तिमार्गानुसारिभिः ॥ ७८ ॥
सतोऽस्य किं घटस्येव प्रत्यक्षेण न दर्शनम् । अस्त्येव दर्शन स्पष्टमहम्प्रत्ययवेदनात् ॥ ७९ ॥
भ्रान्तोऽहं गुरुरित्येष सत्यमन्यस्त्वसौ मत । व्यभिचारित्वतो नाऽस्य गमकत्वमथोच्यते ॥ ८० ॥
प्रत्यक्षस्यापि तत्त्याज्य तत्स्वभावाविशेषत । प्रत्यक्षाभासमन्यच्चेदव्यभिचारि न साधु तत् ॥ ८१ ॥
अहम्प्रत्ययपक्षेऽपि ननु सर्वमिद समम् । अतस्तद्वदसौ मुख्य सम्यक् प्रत्यक्षमिष्यताम् ॥ ८२ ॥
गुर्वी मे तनुरित्यादौ भेदप्रत्ययदर्शनात् । भ्रान्तताभिमतस्यैव सा युक्ता नेतरस्य तु ॥ ८३ ॥
आत्मनात्मग्रहोऽप्यत्र तथानुभवसिद्धितः । तस्यैव तत्स्वभावत्वान्न तु युक्त्या न युज्यते ॥ ८४ ॥
न च बुद्धिविशेषोऽयमहङ्कार प्रकल्प्यते । दानादिबुद्धिकालेऽपि तथाऽहङ्कारवेदनात् ॥ ८५ ॥
आत्मतात्मग्रहे तस्य तत्स्वभावत्वयोगत । सदैवाग्रहण चेन्न चित्रं यत्कर्मदोषत ॥ ८६ ॥

अतः प्रत्यक्षसंसिद्धः सर्वप्राणभृतामयम्। स्वयञ्ज्योतिः सदैवात्मा तथा वेदेऽपि पठ्यते ॥ ८७ ॥
अत्रापि वर्णयन्त्येके सौगताः कृतबुद्धयः। क्लिष्टं मनोऽस्ति यन्नित्यं तद्यथोक्तात्मलक्षणम् ॥ ८८ ॥
यदि नित्यं तदात्मैव संज्ञाभेदोऽत्र केवलम्। अथानित्यं ततश्चेदं न यथोक्तात्मलक्षणम् ॥ ८९ ॥
यः कर्ता कर्मभेदानां भोक्ता कर्मफलस्य च। संसर्ता परिनिर्वाता स ह्यात्मा नान्यलक्षणः ॥ ९० ॥
आत्मत्वेनाविशिष्टस्य वैचित्र्यं तस्य यद्वशात्। नरादिरूपं तच्चित्रमदृष्टं कर्मसंज्ञितम् ॥ ९१ ॥
तथा तुल्येऽपि चारम्भे सदुपायेऽपि यो नृणाम्। फलभेदः स युक्तो न युक्त्या हेत्वन्तरं विना ॥ ९२ ॥
तस्मादवश्यमेष्टव्यमत्र हेत्वन्तरं परैः। तदेवादृष्टमित्याहुरन्ये शास्त्रकृतश्रमाः ॥ ९३ ॥
भूतानां तत्स्वभावत्वादयमित्यप्यनुत्तरम्। न भूतात्मक एवात्मेत्येतदत्र निदर्शितम् ॥ ९४ ॥
कर्मणो भौतिकत्वेन यद्वैतदपि साम्प्रतम्। आत्मनो व्यतिरिक्तं तच्चित्रभावं यतो मतम् ॥ ९५ ॥
शक्तिरूपं तदन्ये तु सूरयः सम्प्रचक्षते। अन्ये तु वासनारूपं विचित्रफलदं तथा ॥ ९६ ॥
अन्ये त्वभिदधत्यत्र स्वरूपानियतस्य वै। कर्तुर्विनान्यसम्बन्धं शक्तिराकस्मिकी कुतः ॥ ९७ ॥

तत्क्रियायोगतः सा चेत्तदपुष्टौ न युज्यते । तदन्ययोगाभावे च पुष्टिरस्य कथ भवेत् ॥ ९८ ॥
अस्त्येव सा सदा किन्तु क्रियया व्यज्यते परम्। आत्ममात्रस्थिताया न तस्या व्यक्तिः कदाचन ॥ ९९ ॥
तदन्यावरणाभावाद् भावे वाऽस्यैव कर्मता । तन्निराकरणाद्व्यक्तिरिति तद्भेदसंस्थिति ॥ १०० ॥
पाप तद्भिन्नमेवास्तु क्रियान्तरनिबन्धनम् । एवमिष्टक्रियाजन्य पुण्य किमिति नेष्यते ॥ १०१ ॥
वासनाप्यन्यसम्बन्ध विना नैवोपपद्यते । पुष्पादिगन्धवैकल्ये तिलादौ नेक्ष्यते यत ॥ १०२ ॥
बोधमात्रातिरिक्त तद्वासक किञ्चिदिष्यताम् । मुख्य तदेव च कर्म न युक्ता वासनाऽन्यथा ॥ १०३ ॥
बोधमात्रस्य तद्भावे नास्ति ज्ञानमवासितम् । ततो मुक्ति सदैव स्यादेशिष्य केवलस्य न ॥ १०४ ॥
एव शक्त्यादिपक्षोऽय घटते नोपपत्तिच । बन्धान्न्यूनातिरिक्तत्वे तद्भावानुपपत्तित ॥ १०५ ॥
तस्मात्तदात्मनो भिन्न सच्चित्र चात्मयोगि च । अदृष्टमवगन्तव्य तस्य शक्त्यादिसाधकम् ॥ १०६ ॥
अदृष्ट कर्म सस्कारा पुण्यापुण्ये शुभाशुभौ । धर्माधर्मौ तथा पाश पर्यायास्तस्य कीर्तिता ॥१०७॥
हेतवोऽस्य समाख्याता पूर्व हिंसानृतादय । तद्वान् सयुज्यतेऽनेन विचित्रफलदायिना ॥ १०८ ॥

नैवं दृष्टेष्टबाधा यत्सिद्धिश्चास्यानिवारिता । तदेनमेव विद्वांसस्तत्त्ववादं प्रचक्षते ॥ १०९ ॥
लोकायतमतं प्राज्ञैर्ज्ञेयं पापौघकारणम् । इत्थं तत्त्वविलोमं यत्तन्न ज्ञानविवर्धनम् ॥ ११० ॥
इन्द्रप्रतारणायेदं चक्रे किल बृहस्पतिः । अदोऽपि युक्तिशून्यं यन्नेत्थमिन्द्रः प्रतार्यते ॥ १११ ॥
तस्माद् दुष्टाशयकरं क्लिष्टसत्त्वविचिन्तितम् । पापश्रुतं सदा धीरैर्वर्ज्यं नास्तिकदर्शनम् ॥ ११२ ॥

२ हिंसादिभ्योऽशुभं कर्म तदन्येभ्यश्च तच्छुभम् । जायते नियमो मानात्कुतोऽयमिति चापरे ॥ १ ॥
आगमाख्यात्तदन्ये तु तच्च दृष्टाद्यबाधितम् । सर्वार्थविषयं नित्यं व्यक्तार्थं परमात्मना ॥ २ ॥
चन्द्रसूर्योपरागादेस्ततः संवाददर्शनात् । अप्रत्यक्षेऽपि पापादौ न प्रामाण्यं न युज्यते ॥ ३ ॥
यदि नाम क्वचिद् दृष्टः संवादोऽन्यत्र वस्तुनि । तद्भावस्तस्य तत्त्वं वा कथं समवसीयते ॥ ४ ॥
आगमैकत्वतस्तच्च वाक्यादेस्तुल्यतादिना । सुवृद्धसम्प्रदायेन तथा पापक्षयेण च ॥ ५ ॥
अन्यथा वस्तुतत्त्वस्य परीक्षैव न युज्यते । आशङ्का सर्वगा यस्माच्छद्मस्थस्योपजायते ॥ ६ ॥
अपरीक्षापि नो युक्ता गुणदोषाविवेकतः । महत् सङ्कटमायातमाशङ्के न्यायवादिनः ॥ ७ ॥

तस्माद्यथोदितात्सम्यगागमाख्यात्प्रमाणत । हिंसादिभ्योऽशुभादीनि नियमोऽय व्यवस्थित ॥ ८ ॥
क्लिष्टाद्धिंसाद्यनुष्ठानाद्यदास्ति क्लिष्टस्य कर्मण । यथाऽपथ्यभुजो व्याधेरक्लिष्टस्य विपर्ययात् ॥ ९ ॥
स्वभाव एव जीवस्य यत्तथा परिणामभाक् । बध्यते पुण्यपापाभ्यां माध्यस्थ्यात्तु विमुच्यते ॥ १० ॥
सुदूरमपि गत्वेह विहितासूपपत्तिषु । क स्वभावागमावन्ते शरण न प्रपद्यते ॥ ११ ॥
प्रतिपक्षस्वभावेन प्रतिपक्षागमेन च । बाधितत्वात्कथं ह्येतौ शरण युक्तिवादिनाम् ॥ १२ ॥
प्रतीत्या बाध्यते यो यत्स्वभावो न स युज्यते । वस्तुन कल्प्यमानोऽपि वह्न्यादे शीततादिवत् ॥ १३ ॥
वह्ने शीतत्वमस्त्येव तत्कार्यं किं न दृश्यते । दृश्यते हि हिमासन्ने कथमित्थ स्वभावत ॥ १४ ॥
हिमस्यापि स्वभावोऽय नियमाद्वह्निसन्निधौ । करोति दाहमित्येव वह्न्यादे शीतता न किम् ॥ १५ ॥
व्यवस्थाऽभावतो ह्येव या त्वद्बुद्धिरिहेदृशी । सा कोष्ठादस्य यत्कार्यं तत्त्वतस्तत्स्वभावत ॥ १६ ॥
एव सुबुद्धिशून्यत्व भवतोऽपि प्रसज्यते । अस्तु चेत् को विवादो नो बुद्धिशून्येन सर्वथा ॥ १७ ॥
अन्यस्त्वाहेह सिद्धेऽपि हिंसादिभ्योऽशुभादिके । शुभादेरेव सौख्यादि केन मानेन मन्यते ॥ १८ ॥

अत्रापि ब्रुवते केचित्सर्वथा युक्तिवादिनः । प्रतीतिगर्भया युक्त्या किलैतदवसीयते ॥ १९ ॥
तयाहुर्नाशुभात्सौख्यं तद्बाहुल्यप्रसङ्गतः । बहवः पापकर्माणो विरलाः शुभकारिणः ॥ २० ॥
न चैतद्दृश्यते लोके दुःखबाहुल्यदर्शनात् । शुभात्सौख्यं ततः सिद्धमतोऽन्यच्चाप्यतोऽन्यतः ॥ २१ ॥
अन्ये पुनरिदं श्राद्धा ब्रुवत आगमेन वै । शुभादेव सौख्यादि गम्यते नान्यतः क्वचित् ॥ २२ ॥
अतीन्द्रियेषु भावेषु प्राय एवंविधेषु यत् । छद्मस्थस्याविसंवादि मानमन्यन्न विद्यते ॥ २३ ॥
यच्चोक्तं दुःखबाहुल्यदर्शनं तन्न साधकम् । क्वचित्तथोपलम्भेऽपि सर्वत्रादर्शनादिति ॥ २४ ॥
सर्वत्र दर्शनं यस्य तद्वाक्यात् किं न साधनम् । साधनं तद्भवत्येवमागमात्तु न भिद्यते ॥ २५ ॥
अशुभादप्यनुष्ठानात् सौख्यप्राप्तिश्च या क्वचित् । फलं विपाकविरसा सा तथाविधकर्मणः ॥ २६ ॥
ब्रह्महत्यानिदेशानुष्ठानाद्ग्रामादिलाभवत् । न पुनस्तत एवैतदागमादेव गम्यते ॥ २७ ॥
प्रतिपक्षागमानां च दृष्टेष्टाभ्यां विरोधतः । तथानाप्तप्रणीतत्वादागमत्वं न युज्यते ॥ २८ ॥
दृष्टेष्टाभ्यां विरोधाच्च तेषां नाप्तप्रणीतता । नियमाद्गम्यते यस्मात्तदसावेव दृश्यते ॥ २९ ॥

अगम्यगमनादीनां धर्मसाधनता क्वचित् । उक्ता लोकप्रसिद्धेन प्रत्यक्षेण विरुध्यते ॥ ३० ॥
स्वधर्मोत्कर्पा(र्पणा)देव तथा मुक्तिरपीप्यते । हेत्स्वभावेन तद्भावो नित्य इष्टेन बाध्यते ॥ ३१ ॥
माध्यस्थ्यमेव तद्धेतुरगम्यगमनादिना । साध्यते तत्पर येन तेन दोषो न कश्चन ॥ ३२ ॥
एतदप्युक्तिमात्र यदगम्यगमनादिषु । तथाप्रवृत्तितो युक्त्या माध्यस्थ्य नोपपद्यते ॥ ३३ ॥
अप्रवृत्त्यैव सर्वत्र यथासामर्थ्यभावत । विशुद्धभावनाभ्यासात् तन्माध्यस्थ्य पर यत ॥ ३४ ॥
यावदेवविध नैतत्प्रवृत्तिस्तावदेव या । साऽविशेषेण साध्वीति तस्योत्कर्षप्रसाधनात् ॥ ३५ ॥
नाप्रवृत्तेरिय हेतु कुतश्चिदनिवर्तनात् । सर्वत्र भावाविच्छेदादन्यथागम्यसस्थिति ॥ ३६ ॥
तस्यास्तु लोकशास्त्रोक्त तत्रौदासीन्ययोगत । सम्भाव्येत पर ह्येतद्भावशुद्धेर्महात्मनाम् ॥ ३७ ॥
ससारमोचकस्यापि हिंसा यद्धर्मसाधनम् । मुक्तिश्चास्ति ततस्तस्याप्येष दोषोऽनिवारित ॥ ३८ ॥
मुक्ति कर्मक्षयादेव जायते नान्यत क्वचित् । जन्मादिरहिता यत्तत्स एवात्र निरूप्यते ॥ ३९ ॥
हिंसाद्युत्कर्षसाध्यो वा तद्विपर्ययजोऽपि वा । अन्यहेतुरहेतुर्वा स वै कर्मक्षयो ननु ॥ ४० ॥

कर्मक्षयास्थितौ च स्यान्मुक्तानां मुक्तताक्षतिः ॥ ४१ ॥
हिंसाद्युत्कर्षसाध्यत्वे तदभावे न तत् स्थितिः। कर्मक्षयः सतां यस्मादहिंसादिप्रसाधनः ॥ ४२ ॥
तद्विपर्ययसाध्यत्वे परासिद्धान्तसंस्थितिः । अहेतुत्वे सदा भावोऽभावो वा स्यात्सदैव हि ॥ ४३ ॥
तदन्यहेतुसाध्यत्वे तत्स्वरूपमसंस्थितम् । अहिंसादि च तद्धेतुरिति न्यायः सतां मतः ॥ ४४ ॥
मुक्तिः कर्मक्षयादिष्टा ज्ञानयोगफलं स च । शास्त्रचोदितभावेऽपि वचनान्तरबाधनात् ॥ ४५ ॥
एवं वेदविहितापि हिंसा पापाय तत्त्वतः । दाहवद्वैद्यके स्पष्टमुत्सर्गप्रतिषेधतः ॥ ४६ ॥
न हिंस्यादिह भूतानि हिंसनं दोषकृन्मतम् । न ततोऽपि न दोषः स्यात्फलोद्देशेन चोदनात् ॥४७ ॥
ततो व्याधिनिवृत्त्यर्थं दाहः कार्यस्तु चोदिते । ध्रुवमौत्सर्गिको दोषो जायते फलचोदनात् ॥ ४८ ॥
एवं तत्फलभावेऽपि चोदनातोऽपि सर्वथा । दर्शनीया कुशास्त्राणां ततश्च स्थितमित्यदः ॥ ४९ ॥
अन्येषामपि बुद्ध्यैवं दृष्टेष्टाभ्यां विरुद्धता । ततः कर्ता स एव स्यात्सर्वस्यैव हि कर्मणः ॥ ५० ॥
क्लिष्टं हिंसाद्यनुष्ठानं न यत्तस्यान्यतो मतम् । अहितेऽप्यात्मनः प्रायो व्याधिपीडितचित्तवत् ॥ ५१ ॥
अनादिकर्मयुक्तत्वात्तन्मोहात्सम्प्रवर्तते ।

कालादीनां च कर्तृत्व मन्यन्तेऽन्ये प्रवादिन । केवलानां तदन्ये तु मिथ सामग्र्यपेक्षया ॥ ५२ ॥
न कालव्यतिरेकेण गर्भकालशुभादिकम् । यत्किञ्चिज्जायते लोके तदसौ कारण किल ॥ ५३ ॥
काल पचति भूतानि काल संहरति प्रजा । काल सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ ५४ ॥
किं च कालादृते नैव मुद्गपक्तिरपीष्यते । स्थाल्यादिसन्निधानेऽपि तत कालादसौ मता ॥ ५५ ॥
कालाभावे च गर्भादि सर्वं स्यादव्यवस्थया । परेष्टहेतुसद्भावमात्रादेव तदुद्भवात् ॥ ५६ ॥
न स्वभावातिरेकेण गर्भबालशुभादिकम् । यत्किंचिज्जायते लोके तदसौ कारण किल ॥ ५७ ॥
सर्वे भावा स्वभावे स्वस्वभावेन तथा तथा । वर्तन्तेऽथ निवर्तन्ते कामचारपराङ्मुखा ॥ ५८ ॥
न विनेह स्वभावेन मुद्गपक्तिरपीष्यते । तथा कालादिभावेऽपि नाश्वमाषस्य सा यत ॥ ५९ ॥
अतत्स्वभावात्तद्भावेऽतिप्रसङ्गोऽनिवारित । तुल्ये तत्र मृदः कुम्भो न पटादीत्ययुक्तिमत् ॥ ६० ॥
नियतेनैव रूपेण सर्वे भावा भवन्ति यत् । ततो नियतिजा ह्येते तत्स्वरूपानुवेधतः ॥ ६१ ॥
यद्यदेव यतो यावत्तत्तदेव ततस्तथा । नियत जायते न्यायात् क एतां बाधितु क्षम ॥ ६२ ॥

॥ ६३ ॥

नचर्ते नियर्तिं लोके मुद्गपक्तिरपीक्ष्यते । तत्स्वभावादिभावेऽपि नासावनियता यतः ॥ ६४ ॥

अन्यथानियतत्वेन सर्वभावः प्रसज्यते । अन्योन्यात्मकतापत्तेः क्रियावैफल्यमेव च ॥ ६५ ॥

न भोक्तृव्यतिरेकेण भोग्यं जगति विद्यते । न चाकृतस्य भोक्ता स्यान्मुक्तानां भोगभावतः ॥ ६६ ॥

भोग्यं च विश्वं सत्त्वानां विधिना तेन तेन यत् । दृश्यतेऽध्यक्षमेवेदं तस्मात्तत्कर्मजं हि तत् ॥ ६७ ॥

न च तत्कर्मवैधुर्ये मुद्गपक्तिरपीक्ष्यते । स्थाल्यादिभङ्गभावेन यत् क्वचिन्नोपपद्यते ॥ ६८ ॥

चित्रं भोग्यं तथा चित्रात्कर्मणो हेतुताऽन्यथा । तस्य यस्माद्विचित्रत्वं नियत्यादेर्न युज्यते ॥ ६९ ॥

नियतेर्नियतात्मत्वान्नियतानां समानता । तथाऽनियतभावे च बलात्स्यात्ताद्विचित्रता ॥ ७० ॥

न च तन्मात्रभावादेर्युज्यतेऽस्या विचित्रता । तदन्यभे(द्भे)दकं मुक्त्वा सम्यङ्न्यायाविरोधतः ॥ ७१ ॥

न जलस्यैकरूपस्य वियत्पाताद्विचित्रता । ऊषरादिधराभेदमन्तरेणोपजायते ॥ ७२ ॥

तद्भिन्नभेदकत्वे च तत्र तस्या न कर्तृता । तत्कर्तृत्वे च चित्रत्वं तद्वत्तस्याप्यसङ्गतम् ॥ ७३ ॥

तस्या एव तथाभूतः स्वभावो यदि वेष्यते । त्यक्तो नियतिवादः स्यात्स्वभावाश्रयणान्ननु

स्वो भावश्च स्वभावोऽपि स्वसत्तैव हि भावतः। तस्यापि भेदकाभावे वैचित्र्य नोपपद्यते ॥ ७४ ॥
ततस्तस्याविशिष्टत्वाद्युगपद्विश्वसम्भव । न चासाविति सद्युक्त्या तद्वादोऽपि न सङ्गत ॥ ७५ ॥
तत्तत्कालादिसापेक्षो विश्वहेतुः स चेन्ननु। मुक्त स्वभाववाद स्यात् कालवादपरिग्रहात् ॥ ७६ ॥
कालोऽपि समयादिर्यत्केवल सोऽपि कारणम्। तत एव ह्यसम्भूते कस्यचिन्नोपपद्यते ॥ ७७ ॥
यतश्च काले तुल्येऽपि सर्वत्रैव न तत्फलम्। अतो हेत्वन्तरापेक्ष विज्ञेय तद्विचक्षणे ॥ ७८ ॥
अत कालादय सर्वे समुदायेन कारणम्। गर्भादे कार्यजातस्य विज्ञेया न्यायवादिभि ॥ ७९ ॥
न चैकैकत एवेह क्वचित् किञ्चिदपीक्ष्यते। तस्मात्सर्वस्य कार्यस्य सामग्री जनिका मता ॥ ८० ॥
स्वभावो नियतिश्चैव कर्मणोऽन्ये प्रचक्षते। धर्मावन्ये तु सर्वस्य सामान्येनैव वस्तुन ॥ ८१ ॥१९३॥
२ ईश्वर प्रेरकत्वेन कर्त्ता कैश्चिदिहेष्यते। अचिन्त्यचिच्छक्तियुक्तोऽनादिशुद्धश्च सूरिभि ॥ १ ॥
ज्ञानमप्रतिघ यस्य वैराग्य च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सहसिद्ध चतुष्टयम् ॥ २ ॥
अज्ञो जन्तुरनीशोऽयमात्मन सुखदु खयो। ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥ ३ ॥

अन्ये त्वभिदधत्यत्र वीतरागस्य भावतः । इत्थं प्रयोजनाभावात्कर्तृत्वं युज्यते कथम् ॥ ४ ॥
नरकादिफले कांश्चित्कांश्चित्स्वर्गादिसाधने । कर्मणि प्रेरयत्याशु स जन्तून् केन हेतुना ॥ ५ ॥
स्वयमेव प्रवर्तन्ते सत्त्वाश्चेच्चित्रकर्मणि । निरर्थकमिहेशस्य कर्तृत्वं गीयते कथम् ॥ ६ ॥
फलं ददाति चेत्सर्वं तत्तेनेह प्रचोदितम् । अफले पूर्वदोषः स्यात्सफले भक्तिमात्रता ॥ ७ ॥
आदिसर्गेऽपि नो हेतुः कृतकृत्यस्य विद्यते । प्रतिज्ञातविरोधित्वात् स्वभावोऽप्यप्रमाणकः ॥ ८ ॥
कर्मादेस्तत्स्वभावत्वे न किञ्चिद्बाध्यते विभोः । विभोस्तु तत्स्वभावत्वे कृतकृत्यत्वबाधनम् ॥ ९ ॥
ततश्चेश्वरकर्तृत्ववादोऽयं युज्यते परम् । सम्यग्न्यायाविरोधेन यथाहुः शुद्धबुद्धयः ॥ १० ॥
ईश्वरः परमात्मैव तदुक्तव्रतसेवनात् । यतो मुक्तिस्ततस्तस्याः कर्ता स्याद्गुणभावतः ॥ ११ ॥
तदनासेवनादेव यत्संसारोऽपि तत्त्वतः । तेन तस्यापि कर्तृत्वं कल्प्यमानं न दुष्यति ॥ १२ ॥
कर्तायमिति तद्वाक्ये यतः केषाञ्चिदादरः । अतस्तदानुगुण्येन तस्य कर्तृत्वदेशना ॥ १३ ॥
परमैश्वर्ययुक्तत्वान्मत आत्मैव चेश्वरः । स च कर्तेति निर्दोषः कर्तृवादो व्यवस्थितः ॥ १४ ॥

शास्त्रकारा महात्मानः प्रायो वीतस्पृहा भवे । सत्त्वार्थसम्प्रवृत्ताश्च कथं तेऽयुक्तभाषिणः ॥ १५ ॥
अभिप्रायस्ततस्तेषां सम्यग्मृग्यो हितैषिणा । न्यायशास्त्राविरोधेन यथाह मनुरप्यदः ॥ १६ ॥
आर्षं च धर्मशास्त्रं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ १७ ॥
प्रधानोद्भवमन्ये तु मन्यन्ते सर्वमेव हि । महदादिक्रमेणेह कार्यजातं विपश्चितः ॥ १८ ॥
प्रधानान्महतो भावोऽहङ्कारस्य ततोऽपि च । अक्षतन्मात्रवर्गस्य तन्मात्राद्भूतसंहतेः ॥ १९ ॥
घटाद्यपि पृथिव्यादिपरिणामसमुद्भवम् । नात्मव्यापारजं किञ्चित्तेषां लोकेऽपि विद्यते ॥ २० ॥
अन्ये तु ब्रुवते ह्येतत्प्रक्रियामात्रवर्णनम् । अविचार्यैव तद्युक्त्या श्रद्धया गम्यते परम् ॥ २१ ॥
युक्त्या तु बाध्यते यस्मात्प्रधानं नित्यमिष्यते । तथात्वाप्रच्युतौ चास्य महदादि कथं भवेत् ॥ २२ ॥
तस्यैव तत्स्वभावत्वादिति चेत्किं न सर्वदा । अत एवेति चेत्तस्य तथात्वे ननु तत्कुतः ॥ २३ ॥
नानुपादानमन्यस्य भावेऽन्यज्जातुचिद्भवेत् । तदुपादानतायां च न तस्यैकान्तनित्यता ॥ २४ ॥
घटाद्यपि कुलालादिसापेक्षं दृश्यते भवत् । अतो न तत्पृथिव्यादिपरिणामैकहेतुकम् ॥ २५ ॥

तत्रापि देहः कर्ता चेन्नैवासावात्मनः पृथक् । पृथगेवेति चेद्भोग आत्मनो युज्यते कथम् ॥ २६ ॥
देहभोगेन नैवास्य भावतो भोग इष्यते । प्रतिबिम्बोदयात् किन्तु यथोक्तं पूर्वसूरिभिः ॥ २७ ॥
पुरुषोऽविकृतात्मैव स्वनिर्भासमचेतनम् । मनः करोति सान्निध्यादुपाधिः स्फटिकं यथा ॥ २८ ॥
विभक्तेदृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते। प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥ २९ ॥
प्रतिबिम्बोदयोऽप्यस्य नामूर्तत्वेन युज्यते। मुक्तेरतिप्रसङ्गाच्च न वै भोगः कदाचन ॥ ३० ॥
न च पूर्वस्वभावत्वात्स मुक्तानामसङ्गतः । स्वभावान्तरभावे च परिणामोऽनिवारितः ॥ ३१ ॥
देहात्पृथक्त्व एवास्य न च हिंसादयः क्वचित्। तदभावेऽनिमित्तत्वात्कथं बन्धः शुभाशुभः ॥ ३२ ॥
बन्धादृते न संसारो मुक्तिर्वास्योपपद्यते । यमादि तदभावे च सर्वमेव ह्यपार्थकम् ॥ ३३ ॥
आत्मा न बध्यते नापि मुच्यतेऽसौ कदाचन। बध्यते मुच्यते वापि प्रकृतिः स्वात्मनेति चेत् ॥ ३४ ॥
एकान्तेनैकरूपाया नित्यायाश्च न सर्वथा। तस्याः क्रियान्तराभावाद्बन्धमोक्षौ सुयुक्तितः ॥ ३५ ॥
मोक्षः प्रकृत्ययोगो यदतोऽस्याः स कथं भवेत् । स्वरूपविगमापत्तेस्तथा तन्त्रविरोधतः ॥ ३६ ॥

पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रत । जटी मुण्डी शिखी वापि मुच्यते नात्र सशय ॥ ३७ ॥
पुरुषस्योदिता मुक्तिरिति तन्त्रे चिरन्तने । इत्थ न घटते चेयमिति सर्वमयुक्तिमत् ॥ ३८ ॥
अत्रापि पुरुषस्यान्ये मुक्तिमिच्छन्ति वादिन । प्रकृतिं चापि सन्न्यायात्कर्मप्रकृतिमेव हि ॥ ३९ ॥
तस्याश्चानेकरूपत्वात् परिणामित्वयोगत । आत्मनो बन्धनत्वाच्च नोक्तदोषसमुद्भव ॥ ४० ॥
नामूर्त्तं मूर्त्ततां याति मूर्त्तं न यात्यमूर्त्तताम्। यतो बन्धाद्यतो न्यायादात्मनोऽसङ्गत तथा ॥ ४१ ॥
देहस्पर्शादिसवित्त्या न यात्येवेत्ययुक्तिमत्। अन्योन्यव्याप्तिजा चेयमिति बन्धादिसङ्गतम्॥ ४२ ॥
मूर्त्तयाप्यात्मनो योगो घटेन नभसो यथा । उपघातादिभावश्च ज्ञानस्येव सुरादिना ॥ ४३ ॥
एव प्रकृतिवादोऽपि विज्ञेय सत्य एव हि। कपिलोक्तत्वतश्चैव दिव्यो हि स महामुनि ॥ ४४ ॥२३७॥

४ मन्यन्तेऽन्ये जगत्सर्वं क्लेशकर्मनिबन्धनम् । क्षणक्षयि महाप्राज्ञा ज्ञानमात्र तथापरे ॥ १ ॥
त ह्याहु क्षणिक सर्व नाशहेतोरयोगत । अर्थक्रियासमर्थत्वात् परिणामात् क्षयेक्षणात् ॥ २ ॥
ज्ञानमात्र च यल्लोके ज्ञानमेवानुभूयते । नार्थस्तद्व्यतिरेकेण ततोऽसौ नैव विद्यते ॥ ३ ॥

अत्राप्यभिदधत्यन्ये स्मरणादेरसम्भवात् । बाह्यार्थवेदनाच्चैव सर्वमेतदपार्थकम् ॥ ४ ॥

अनुभूतार्थविषयं स्मरणं लौकिकं यतः । कालान्तरे तथाऽनित्ये मुख्यमेतन्न युज्यते ॥ ५ ॥

सोऽन्तेवासी गुरुः सोऽयं प्रत्यभिज्ञाप्यसङ्गता । दृष्टकौतुकमुद्वेगः प्रवृत्तिः प्राप्तिरेव च ॥ ६ ॥

स्वकृतस्योपभोगस्तु दूरोत्सारित एव हि । शीलानुष्ठानहेतुर्यः स नश्यति तदैव यत् ॥ ७ ॥

सन्तानापेक्षयास्माकं व्यवहारोऽखिलो मतः । स चैक एव तस्मिंश्च सति कस्मान्न युज्यते ॥ ८ ॥

यस्मिन्नेव तु सन्ताने आहिता कर्मवासना । फलं तत्रैव सन्धत्ते कर्पासे रक्तता यथा ॥ ९ ॥

एतदप्युक्तिमात्रं यन्न हेतुफलभावतः । सन्तानोऽन्यः स चायुक्त एवासत्कार्यवादिनः ॥ १० ॥

नाभावो भावतां याति शशशृङ्गे तथागतेः । भावो नाभावमेतीह तदुत्पत्त्यादिदोषतः ॥ ११ ॥

सतोऽसत्त्वे तदुत्पादस्ततो नाशोऽपि तस्य यत् । तन्नष्टस्य पुनर्भावः सदा नाशे न तत्स्थितिः ॥ १२ ॥

स क्षणस्थितिधर्मा चेद् द्वितीयादिक्षणास्थितौ । युज्यते ह्येतदप्यस्य तथा चोक्तानतिक्रमः ॥ १३ ॥

क्षणस्थितौ तदैवास्य नास्थितिर्युक्त्यसङ्गतेः । न पश्चादपि सा नेति सतोऽसत्त्वं व्यवस्थितम् ॥ १४ ॥

न तत्र भवति चेत्किं न सदासत्त्व तदेव यत्। न भवत्येतदेवास्य भवन सूरयो विदुः ॥ १५ ॥
कादाचित्कमदो यस्मादुत्पादाख्यस्य तद्ध्रुवम्। तुच्छत्वान्नेत्यतुच्छस्याप्यतुच्छत्वात् कथ नु यत्॥ १६ ॥
तदाभूतेरियं तुल्या तन्निवृत्तेर्न तस्य किम्। तुच्छतासेर्न भावोऽस्तु नासत्सत्त्वसदसत् कथम् ॥ १७ ॥
स्वहेतोरेव तज्जात तत्स्वभाव यतो ननु। तदनन्तरभावित्वादितरत्राप्यद समम् ॥ १८ ॥
नाहेतोरस्य भवन न तुच्छे तत्स्वभावता। तत कथ नु तद्भाव इति युक्त्या कथ समम् ॥ १९ ॥
स एव भावस्तद्धेतुस्तस्यैव हि तदा स्थिते। स्वनिवृत्तिस्वभावोऽस्य भावस्यैव ततो न किम् ॥ २० ॥
ज्ञेयत्ववत्स्वभावोऽपि न चायुक्तोऽस्य तद्विध। तदभावे न तज्ज्ञान तन्निवृत्तेर्गति कथम् ॥ २१ ॥
तत्तद्विधस्वभाव यत्प्रत्यक्षेण तथैव हि। गृह्यते तद्गतिस्तेन नैतत् क्वचिदनिश्चयात् ॥ २२ ॥
समारोपादसौ नेति गृहीत तत्त्वतस्तु तत्। यथाभावग्रहात्तस्यातिप्रसङ्गाददोऽप्यसत् ॥ २३ ॥
गृहीत सर्वमेतेन तत्त्वतो निश्चय पुन। मितग्रहसमारोपादिति सत्त्वव्यवस्थिते ॥ २४ ॥
एकत्र निश्चयोऽन्यत्र निरंशानुभवादपि। न तथापाटवाभावादित्यपूर्वमिद तम ॥ २५ ॥

स्वभावक्षणतो ह्यूर्ध्वं तुच्छता तान्निवृत्तितः । नासावेकक्षणग्राहिज्ञानात्सम्यग्विभाव्यते ॥२६॥२६३॥
तस्यां च नागृहीतायां तत्तथेति विनिश्चयः । न हीन्द्रियमतीतादिग्राहकं सद्भिरिष्यते ॥ २७ ॥
अन्तेऽपि दर्शनं नास्य कपालादिगतेः क्वचित् । न तदेव घटाभावो भावत्वेन प्रतीतितः ॥ २८ ॥
न तद्गतेर्गतिस्तस्य प्रतिबन्धविवेकतः । तस्यैवाभवनत्वे तु भावाविच्छेदतोऽन्वयः ॥ २९ ॥
तस्मादवश्यमेष्टव्यं तदूर्ध्वं तुच्छमेव तत् । ज्ञेयं सज्ज्ञायते ह्येतदपरेणापि युक्तिमत् ॥ ३० ॥
नोत्पत्त्यादेस्तयोरैक्यं तुच्छेतरविशेषतः । निवृत्तिभेदतश्चैव बुद्धिभेदाच्च भाव्यताम् ॥ ३१ ॥
एतेनैतत्प्रतिक्षिप्तं यदुक्तं न्यायमानिना । न तत्र किञ्चिद्भवति न भवत्येव केवलम् ॥ ३२ ॥
भावे ह्येष विकल्पः स्याद्विधेर्वस्त्वनुरोधतः । न भावो भवतीत्युक्तमभावो भवतीत्यपि ॥ ३३ ॥
एतेनाहेतुकत्वेऽपि ह्यभूत्वा नाशभावतः । सन्तानास्तित्वदोषस्य प्रत्याख्यातं प्रसञ्जनम् ॥ ३४ ॥
प्रतिक्षिप्तं च यत्सत्तानाशित्वागो निवारितम् । तुच्छरूपा सदा सत्ता भावासेर्नाशितोदिता ॥ ३५ ॥
भावस्याभवनं यत्तदभावभवनं तु यत् । तत्तथाधर्मके ह्युक्तविकल्पो न विरुध्यते ॥ ३६ ॥ २७३ ॥

तदेव न भवत्येतद्विरुद्धमिव लक्ष्यते । तदेव वस्तुसस्पर्शाद्भवनप्रतिषेधत ॥ ३७ ॥ २७४ ॥
सतोऽसत्त्व यतश्चैव सर्वथा नोपपद्यते । भावो नाभावमेतीह ततश्चैतद्व्यवस्थितम् ॥ ३८ ॥
असत सत्त्वयोगे तु तत्तथाशक्तियोगतः । नासत्त्व तदभावे तु न तत्सत्त्व तदन्यवत् ॥ ३९ ॥
असदुत्पद्यते तद्धि विद्यते यस्य कारणम् । विशिष्टशक्तिमत्तच्च ततस्तत्सत्त्वसस्थिति ॥ ४० ॥
अत्यन्तासति सर्वस्मिन् कारणस्य न युक्तित । विशिष्टशक्तिमत्त्व हि कल्प्यमान विराजते ॥ ४१ ॥
तत्सत्त्वसाधक सम्र तदेव हि तदा न यत् । अत एवेदमित्थ तु न चैतस्येत्ययोगत ॥ ४२ ॥
वस्तुस्थित्या तथा तच्चदनन्तरभावि तत् । नान्यत्ततश्च नाम्नेह न तथास्ति प्रयोजनम् ॥ ४३ ॥
नाम्ना विनापि तत्त्वेन विशिष्टावधिना विना । चिन्त्यतां यदि सन्न्यायाद्वस्तुस्थित्यापि तत्तथा ॥ ४४ ॥
साधकत्वे तु सर्वस्य ततो भाव प्रसज्यते । कारणाश्रयणेऽप्येव न तत्सत्त्व तदन्यवत् ॥ ४५ ॥
किञ्च तत्कारण कार्यभूतिकाले न विद्यते । ततो न जनक तस्य तदा सत्त्वात्पर यथा ॥ ४६ ॥
अनन्तर च तद्भावस्तत्त्वादेव निरर्थक । सम च हेतुफलयोर्नाशोत्पादावसङ्गतौ ॥ ४७ ॥ २८४ ॥

स्तस्तौ भिन्नावभिन्नौ वा ताभ्यां भेदे तयोः कुतः। नाशोत्पादावभेदे तु तयोर्वै तुल्यकालता॥४८॥२८५।

न हेतुफलभावश्च तस्यां सत्यां हि युज्यते । तन्निबन्धनभावस्य द्वयोरपि वियोगतः ॥ ४९ ॥

कल्पितश्चेदयं धर्मधर्मिभावो हि भावतः । न हेतुफलभावः स्यात्सर्वथा तद्भावतः ॥ ५० ॥

न धर्मी कल्पितो धर्मधर्मिभावस्तु कल्पितः । पूर्वो हेतुर्निरंशः स उत्तरः फलमुच्यते ॥ ५१ ॥

पूर्वस्यैव तथाभावाभावे हन्तोत्तरं कुतः । तस्यैव तु तथाभावेऽसतः सत्त्वमदो न सत् ॥ ५२ ॥

तं प्रतीत्य तदुत्पाद इति तुच्छमिदं वचः । अतिप्रसङ्गतश्चैव तथा चाह महामतिः ॥ ५३ ॥

सर्वथैव तथाभाविवस्तुभावादृते न यत् । कारणानन्तरं कार्यं द्राग्नभस्तस्ततो न तत् ॥ ५४ ॥

तस्यैव तत्स्वभावत्वकल्पनासम्पदप्यलम् । न युक्ता युक्तिवैकल्यराहुणा जन्मपीडनात् ॥ ५५ ॥

तदनन्तरभावित्वमात्रतस्तद्व्यवस्थितौ । विश्वस्य विश्वकार्यत्वं स्यात्तद्भावाविशेषतः ॥ ५६ ॥

अभिन्नदेशनादीनामासिद्धत्वादनन्वयात् । सर्वेषामविशिष्टत्वान्न तन्नियमहेतुता ॥ ५७ ॥

योऽप्येकस्यान्यतो भावः सन्ताने दृश्यतेऽन्यदा । तत एव विदेशस्थात्सोऽपि यत्तन्न बाधकः ।५८॥२९५।

एतेनैतव्यतिक्षिप्त यदुक्त सूक्ष्मबुद्धिना । नासतो भावकर्तृत्व तदवस्थान्तर न स ॥५९॥ २९६ ॥
वस्तुनोऽनन्तरं सत्ता कस्यचिद्या नियोगतः । सा तत्फल मता सैव भावोत्पत्तिस्तदात्मिका ॥ ६० ॥
असदुत्पत्तिरप्यस्य प्रागसत्त्वात्प्रकीर्तिता । नासत सत्त्वयोगेन कारणात्कार्यभावत ॥ ६१ ॥
प्रतिक्षिप्त च तद्धेतो प्राप्नोति फलता विना । असतो भावकर्तृत्व तदवस्थान्तर च स ॥ ६२ ॥
वस्तुनोऽनन्तर सत्ता तत्तया तां विना भवेत् । नभ पातादसत्सत्त्वयोगाप्नोति न तत्फलम् ॥ ६३ ॥
असदुत्पत्तिरप्येव नास्त्येव प्रागसत्त्वत । किन्त्वसतस्सम्भवत्येवमिति सम्यग्विचार्यताम् ॥ ६४ ॥
एतच्च नोक्तवद्युक्त्या सर्वथा युज्यते यत । नाभावो भावतां याति व्यवस्थितमिद ततः ॥ ६५ ॥
यापि रूपादिसामग्री विशिष्टप्रत्ययोद्भवा । जनकत्वेन बुद्ध्यादे कल्प्यते साप्यनर्थिका ॥ ६६ ॥
सर्वेषां बुद्धिजनने यदि सामर्थ्यमिष्यते । रूपादीनां तत कार्यभेदस्तेभ्यो न युज्यते ॥ ६७ ॥
रूपालोकादिक कार्यमनेक चोपजायते । तेभ्यस्तावद्भ्य एवेति तदेतच्चिन्त्यतां कथम् ॥ ६८ ॥
प्रभूतानां च नैकत्र साध्वी सामर्थ्यकल्पना । तेषां प्रभूतभावेन तदेकत्वविरोधत ॥ ६९ ॥ ३०६ ॥

तानशेषान् प्रतीत्येह भवदेकं कथं भवेत् । एकस्वभावमेकं यत्तु नानेकभावतः ॥ ७० ॥ ३०७ ॥
यतो भिन्नस्वभावत्वे सति तेषामनेकता । तावत्सामर्थ्यजत्वे च कुतस्तस्यैकरूपता ॥ ७१ ॥
यज्जायते प्रतीत्यैकसामर्थ्यं नान्यतो हि तत् । तयोरभिन्नतापत्तेर्भेदे भेदस्तयोरपि ॥ ७२ ॥
न प्रतीत्यैकसामर्थ्यं जायते तत्र किञ्चन । सर्वसामर्थ्यभूतिस्वभावत्वात्तस्य चेन्न तत् ॥ ७३ ॥
प्रत्येकं तस्य तद्भावे युक्ता ह्युक्तस्वभावता । न हि यत्सर्वसामर्थ्यं तत्प्रत्येकत्ववर्जितम् ॥ ७४ ॥
अत्र चोक्तं न चाप्येषां तत्स्वभावत्वकल्पना । साध्वीत्यातिप्रसङ्गादेरन्यथाप्युक्तिसम्भवात् ॥ ७५ ॥
अथान्यत्रापि सामर्थ्यं रूपादीनां प्रकल्प्यते । न तदेव तदित्येवं नाना चैकत्र तत्कुतः ॥ ७६ ॥
सामग्रीभेदतो यश्च कार्यभेदः प्रगीयते । नानाकार्यसमुत्पाद एकस्याः सोऽपि बाध्यते ॥ ७७ ॥
उपादानादिभेदे(भो[भा]गे)न न चैकस्यास्तु सङ्गता । युक्त्या विचार्यमाणेह तदनेकत्वकल्पना ॥७८॥
रूपं येन स्वभावेन रूपोपादानकारणम् । निमित्तकारणं ज्ञाने तत्तेनान्येन वा भवेत् ॥७९॥३१७॥
यदि तेनैव विज्ञानं बोधरूपं न युज्यते । अथान्येन बलाद्रूपं द्विस्वभावं प्रसज्यते ॥ ८० ॥

अबुद्धिजनकव्यावृत्त्या चेद्बुद्धिप्रसाधकः। रूपक्षणो मनुद्धित्वात् कथ रूपस्य साधक ॥८१॥ ११८ ॥
स हि व्यावृत्तिभेदेन रूपादिजनको ननु । उच्यते व्यवहारार्थमेकरूपोऽपि तत्त्वतः ॥ ८२ ॥
अगन्धजननव्यावृत्त्याय कस्मान्न गन्धकृत्। उच्यते तदभावाच्चेन्नावोऽन्यस्याः प्रसज्यते ॥ ८३ ॥
एव व्यावृत्तिभेदेऽपि तस्यानेकस्वभावता । बलादापद्यते सा चायुक्ताभ्युपगमक्षते ॥ ८४ ॥
विभिन्नकार्यजननस्वभावाश्चक्षुरादयः । यदि ज्ञानेऽपि भेदः स्यान्न चेद्भेदो न युज्यते ॥ ८५ ॥
सामग्र्यपेक्षयाप्येव सर्वथा नोपपद्यते । यद्धेतुहेतुमद्भावस्तदेपाप्युक्तिमात्रकम् ॥ ८६ ॥
नानात्वाबाधनाच्चेह कुत स्वकृतवेदनम्। सत्यप्यस्मिन् मिथोऽत्यन्ततद्भेदादिति चिन्त्यताम्॥ ८७ ॥
वास्यवासकभावाच्चेन्नैतत्तस्याप्यसम्भवात् । असम्भव कथ न्वस्य विकल्पानुपपत्तितः ॥ ८८ ॥
वासकाद्वासना भिन्ना अभिन्ना वा भवेद्यदि । भिन्ना स्वय तया शून्यो नैवान्य वासयत्यसौ ॥ ८९ ॥
अथाभिन्ना न सङ्क्रान्तिस्तस्या वासकरूपवत्। वास्ये तस्यां च सत्सिद्धिर्व्यांशस्य प्रजायते॥ ९० ॥
असत्यामपि सङ्क्रान्तौ वासयत्येव चेदसौ। अतिप्रसङ्ग स्यादेव स च न्यायबहिष्कृत ॥९१॥२२८॥

वास्यवासकभावश्च न हेतुफलभावतः । तत्त्वतोऽन्य इति न्यायात्स चायुक्तो निदर्शितः ॥ ९२ ॥
तत्तज्जननस्वभावं जन्यभावं तथापरम् । अतः स्वभावनियमान्नायुक्तः स कदाचन ॥ ९३ ॥
उभयोर्ग्रहणाभावे न तथाभावकल्पनम् । तयोर्न्याय्यं न चैकेन द्वयोर्ग्रहणमस्ति वः ॥ ९४ ॥
एकमर्थं विजानाति न विज्ञानद्वयं यथा । विजानाति न विज्ञानमेकमर्थद्वयं तथा ॥ ९५ ॥
वस्तुस्थित्या तयोस्तत्त्व एकेनापि तथाग्रहात् । नो बाधकं न चैकेन द्वयोर्ग्रहणमस्त्यदः ॥ ९६ ॥
तथाग्रहस्तयोर्नैतरेतरग्रहणात्मकः । कदाचिदपि युक्तो यदतः कथमबाधकम् ॥ ९७ ॥
तथाग्रहे च सर्वत्राविनाभावग्रहं विना । न धूमादिग्रहादेव ह्यनलादिगतिः कथम् ॥ ९८ ॥
समनन्तरवैकल्यं तन्नेत्यनुपपत्तिकम् । तुल्ययोरपि तद्भावे हन्त क्वचिददर्शनात् ॥ ९९ ॥
न तयोस्तुल्यतैकस्य यस्मात्कारणकारणम् । ओघात्तद्धेतुविषयं नन्वेवामितरस्य च ॥ १०० ॥
यः केवलानलग्राहिज्ञानकारणकारणः । सोऽप्येवं न च तद्धेतोस्तज्ज्ञानादपि तद्गतिः ॥ १०१ ॥
तज्ज्ञानं यन्न वै धूमज्ञानस्य समनन्तरः । तथाभूदित्यतो नेह तज्ज्ञानादपि तद्गतिः ॥१०२॥३३९॥

तयेति हन्त कोऽन्यर्थस्तत्तथाभावतो यदि। इतरत्रैकमेवेत्थ मान तद्ग्राहि भाव्यताम् ॥१०३॥२४०॥
तद्भावेऽन्यथाभावस्तस्य सोऽस्यापि विद्यते । अनन्तरचिरातीत तत्पुनर्वस्तुत समम् ॥ १०४ ॥
अग्निज्ञानजमेतेन धूमज्ञान स्वभावत । तथाविकल्पकज्ञानान्यदिति प्रत्युक्तमिष्यताम् ॥ १०५ ॥
अथ कथञ्चिदेकेन तयोरग्रहणे सति । तथाप्रतीतितो न्याय्य न तथाभावकल्पनम् ॥ १०६ ॥
प्रत्यक्षानुपलम्भाभ्यां हन्तैव साध्यते कथम् । कार्यकारणता तस्मात्तदभावादेरनिश्चयात् ॥ १०७ ॥
न पूर्वमुत्तर चेह तदन्याग्रहणाद्ध्रुवम् । गम्यतेऽत इद नातो नन्वतीन्द्रियदर्शनम् ॥ १०८ ॥
विकल्पोऽपि तथा न्यायाद्युज्यते न ह्यनीदृश । तत्संस्कारप्रसूतत्वात् क्षणिकत्वाच्च सर्वथा ॥ १०९ ॥
नेत्थ बोधान्वयाभावे घटते तद्विनिश्चय । माध्यस्थ्यमवलम्ब्यैतच्चिन्त्यतां स्वयमेव तु ॥ ११० ॥
अग्न्यादिज्ञानमेवेह न धूमज्ञानतां यत । अजत्याकारभेदेन कुतो बोधान्वयस्तत ॥ १११ ॥
तदाकारपरित्यागात्तस्याकारान्तरास्थिति । बोधान्वयप्रदीर्घैकाध्यवसायप्रवर्तक ॥ ११२ ॥
स्वसंवेदनसिद्धत्वान्न च भ्रान्तोऽयमित्यपि। कल्पना युज्यते युक्त्या सर्वभ्रान्तिप्रसङ्गत ॥११३॥२५०॥

प्रदीर्घाध्यवसायेन नश्वरादिविनिश्चयः । अस्य च भ्रान्ततायां यत्तत्तथेति न युक्तिमत् ॥ ११४ ॥
तस्मादवश्यमेष्टव्या विकल्पस्यापि कस्यचित् । येन तेन प्रकारेण सर्वथाऽभ्रान्तरूपता ॥ ११५ ॥
सत्यामस्यां स्थितोऽस्माकमुक्तवन्ध्याययोगतः । बोधान्वयो दलोत्पत्त्यभावाच्चातिप्रसङ्गतः ॥ ११६ ॥
अन्यादृशपदार्थेभ्यः स्वयमन्यादृशोऽप्ययम् । यतश्चेष्टस्ततो नास्मात्तत्रासन्दिग्धनिश्चयः ॥ ११७ ॥
तत्तज्जननभावत्वे ध्रुवं तद्भावसङ्गतिः । तस्यैव भावो नान्यो यज्जन्याच्च जननं तथा ॥ ११८ ॥
एवं तज्जन्यभावत्वेऽप्येषा भाव्या विचक्षणैः । तदेव हि यतो भावः स चेतरसमाश्रयः ॥ ११९ ॥
इत्येवमन्वयापत्तिः शब्दार्थादेव जायते । अन्यथा कल्पनं चास्य सर्वथा न्यायबाधितम् ॥ १२० ॥
तद्रूपशक्तिशून्यं तत्कार्यं कार्यान्तरं यथा । व्यापारोऽपि न तस्यापि नापेक्षाऽसत्त्वतः क्वचित् ॥ १२१ ॥
तथापि तु तयोरेव तत्स्वभावत्वकल्पनम् । अन्यत्रापि समानत्वात् केवलं ध्यान्ध्यसूचकम् ॥ १२२ ॥
किञ्चान्यत्क्षणिकत्वे व आर्षार्थोऽपि विरुध्यते । विरोधापादनं चास्य नाल्पस्य तमसः फलम् ॥ १२३ ॥
इत एकनवते कल्पे शक्त्या मे पुरुषो हतः । तेन कर्मविपाकेन पादे विद्धोऽस्मि भिक्षवः ॥ १२४ ॥

मे मयेत्यात्मनिर्देशस्तत्रतोक्ता वधक्रिया। स्वयमासेन यत्तद्वः कोऽय क्षणिकताग्रह ॥ १२५ ॥ ३६२॥
सन्तानापेक्षयैतच्चेदुक्त भगवता ननु । स हेतुफलभावो यत्तन्मे इति न सङ्गतम् ॥ १२६ ॥
ममेति हेतुशक्त्या चेत्तस्यार्थोऽय विवक्षित । नात्र प्रमाणमत्यक्षा तद्विवक्षा यतो मता ॥ १२७ ॥
तद्देशना प्रमाण चेन्न साऽन्यार्था भविष्यति । तत्रापि किं प्रमाण चेदिद पूर्वोक्तमार्षकम् ॥ १२८ ॥
तथान्यदपि यत्कल्पस्थायिनी पृथिवी क्वचित् । उक्ता भगवता भिक्षूनामन्त्र्य स्वयमेव तु ॥ १२९ ॥
पञ्च बाह्या द्विविज्ञेया इत्यन्यदपि चार्षकम् । प्रमाणमवगन्तव्य प्रक्रान्तार्थप्रसाधकम् ॥ १३० ॥
क्षणिकत्वे यतोऽमीषा न द्विविज्ञेयता भवेत् । भिन्नकालग्रहे ग्राभ्या तच्छब्दार्थोपपत्तित ॥ १३१ ॥
एककालग्रहे तु स्यात्तत्रैकस्याप्रमाणता । गृहीतग्रहणादेव मिथ्या तायागत वच ॥ १३२ ॥
इन्द्रियेण परिच्छिन्ने रूपादौ तदनन्तरम् । यद्रूपादि ततस्तत्र मनोज्ञान प्रवर्तते ॥ १३३ ॥
एव च न विरोधोऽस्ति द्विविज्ञेयत्वभावत । पञ्चानामपि चेन्न्यायादेतदप्यसमञ्जसम् ॥ १३४ ॥
नैकोऽपि यद्द्विविज्ञेय एकैकेनैव वेदनात् । सामान्यापेक्षयैतच्चेन्न तत्सत्त्वप्रसङ्गत ॥ १३५ ॥ ३७२ ॥

सत्त्वेऽपि नेन्द्रियज्ञानं हन्त तद्गोचरं मतम् । द्विविज्ञेयत्वमित्येवं क्षणभेदे न तत्त्वतः ॥ १३६ ॥
सर्वमेतेन विक्षिप्तं क्षणिकत्वप्रसाधनम् । तथाप्यूर्ध्वं विशेषेण किञ्चित्तत्रापि वक्ष्यते ॥ १३७ ॥ ३७४ ॥

५ विज्ञानमात्रवादोऽपि न सम्यगुपपद्यते । मानं यत्तत्त्वतः किञ्चिदर्थाभावे न विद्यते ॥ १ ॥
न प्रत्यक्षं यतो भावालम्बनं न तदिष्यते । नानुमानं तथाभूतसाल्लिङ्गानुपलब्धितः ॥ २ ॥
उपलब्धिलक्षणप्राप्तोऽर्थो येनो(यन्नो)पलभ्यते । ततश्चानुपलब्ध्यैव तदभावोऽवसीयते ॥ ३ ॥
उपलब्धिलक्षणप्राप्तिस्तद्धेत्वन्तरसंहतिः । तेषां च तत्स्वभावत्वे तस्यासिद्धिः कथं भवेत् ॥ ४ ॥
सहार्थेन तज्जननस्वभावानीति चेन्ननु । जनयत्येव सत्येवमन्यथा तत्स्वभावता ॥ ५ ॥
योग्यतामधिकृत्याथ तत्स्वभावत्वकल्पना । हन्तैवमपि सिद्धोऽर्थः कदाचिदुपलब्धितः ॥ ६ ॥
अन्यथा योग्यता तेषां कथं युक्त्योपपद्यते । न हि लोकेऽश्वमाषादेः सिद्धा पक्त्यादियोग्यता ॥ ७ ॥
पराभिप्रायतो ह्येतदेवं चेदुच्यते न यत् । उपलब्धिलक्षणप्राप्तोऽर्थस्तस्योपलभ्यते ॥ ८ ॥
अतद्ग्रहणभावैश्च यदि नाम न गृह्यते । तत एतावता सत्त्वं न तस्यातिप्रसङ्गतः ॥ ९ ॥ ३८३ ॥

विज्ञान परस्वसवेद्य न स्वर्थो युक्ति(क्त्य)योगत । अतस्तद्वेदने तस्य ग्रहण नोपपद्यते ॥१०॥२८४॥
एव चाग्रहणादेव तदभावोऽवसीयते । अतः किमुच्यते मानमर्थाभावे न विद्यते ॥ ११ ॥
अर्थग्रहणरूप यत्तत्स्वसवेद्यमिष्यते । तद्वेदने ग्रहस्तस्य तत किं नोपपद्यते ॥ १२ ॥
घटादिज्ञानमित्यादिसवित्तेस्तत्प्रवृत्तित । प्राप्तेरर्थक्रियायोगात् स्मृते कौतुकभावत ॥ १३ ॥
ज्ञानमात्रे तु विज्ञान ज्ञानमेवेत्यदो भवेत् । प्रवृत्त्यादि ततो न स्यात्प्रसिद्ध लोकशास्त्रयो ॥ १४ ॥
तदन्यग्रहणे चास्य प्रद्वेषोऽर्थेऽनिबन्धन । ज्ञानान्तरेऽपि सदृश तदसवेदनादि यत् ॥ १५ ॥
युक्त्ययोगश्च योऽर्थस्य गीयते जातिवादत । ग्राह्यादिभावद्वारेण ज्ञानवादेऽप्यसौ सम ॥ १६ ॥
नैकान्तग्राह्यभाव तद्ग्राहकाभावतो भुवि । ग्राहकैकान्तभाव तु ग्राह्याभावादसङ्गतम् ॥ १७ ॥
विरोधान्नोभयाकारमन्यथा तदसद्भवेत् । नि स्वभावत्वतस्तस्य सत्तैव युज्यते कथम् ॥ १८ ॥
प्रकाशैकस्वभाव हि विज्ञान तत्त्वतो मतम् । अकर्मक तथा चैतत्स्वयमेव प्रकाशते ॥ १९ ॥
यथास्ते शेत इत्यादौ विना कर्म स एव हि । तथोच्यते जगत्यस्मिंस्तथा ज्ञानमपीष्यताम् ॥२०॥२९४॥

उच्यतेऽसाम्प्रतमदः स्वयमेव विचिन्त्यताम् । प्रमाणाभावतस्तत्र यद्येतदुपपद्यते ॥ २१ ॥ ३९५ ॥
एवं न यत्तदात्मानमपि हन्त प्रकाशयेत् । अतस्तादित्थं नो युक्तमन्यथा न व्यवस्थितिः ॥ २२ ॥
व्यवस्थितौ च तत्त्वस्य य(त)थाभावप्रकाशकम्। ध्रुवं यतस्ततोऽकर्मकत्वमस्य कथं भवेत् ॥ २३ ॥
व्यवस्थापकमस्यैवं भ्रान्तं चैतत्तु भावतः। तथेत्यभ्रान्तमत्रापि ननु मानं न विद्यते ॥ २४ ॥
भ्रान्ताच्चाभ्रान्तिरूपा न युक्तियुक्त्या व्यवास्थितिः। दृष्टा तैमिरिकादीनामक्षादाविति चेन्न तत् ॥२५॥
नाक्षादिदोषविज्ञानं तदन्यभ्रान्तिवद्यतः। भ्रान्तं तस्य तथाभावे भ्रान्तस्याभ्रान्तता भवेत् ॥ २६ ॥
न च प्रकाशमात्रं तु लोके क्वचिदकर्मकम् । दीपादौ युज्यते न्यायादतश्चैतदपार्थकम् ॥ २७ ॥
दृष्टान्तमात्रतः सिद्धिस्तदत्यन्तविधर्मिणः । न च साध्यस्य यत्तेन शब्दमात्रमसावपि ॥ २८ ॥
किञ्च विज्ञानमात्रत्वे न संसारापवर्गयोः । विशेषो विद्यते कश्चित्तथा चैतद्वृथोदितम् ॥ २९ ॥
चित्तमेव हि संसारो रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥ ३० ॥
रागादिक्लेशवर्गो यन्न विज्ञानात्पृथग्मतः। एकान्तैकस्वभावे च तस्मिन् किं केन वासितम् ॥३१॥४०५॥

क्लिष्ट विज्ञानमेवासौ क्लिष्टता तत्र(स्य) यद्वशात् । नील्यादिवद्सौ वस्तु तद्वदेव प्रसज्यते ॥३२॥४०६॥
मुक्तौ च तस्य भेदेन भाव· स्यात्स्फटशुद्धिवत् । ततो वाह्यार्थतासिद्धिरनिष्टा सम्प्रसज्यते ॥ ३३ ॥
प्रकृत्यैव तथाभूत तदेव क्लिष्टतेति चेत् । तदन्यूनातिरिक्तत्वे केन युक्तिर्विचिन्त्यताम् ॥ ३४ ॥
असत्यपि च या बाह्ये ग्राह्यग्राहकलक्षणे । द्विचन्द्रभ्रान्तिवद्भ्रान्तिरिय व (न) क्लिष्टतेति चेत् ॥ ३५ ॥
अस्त्येतत्किन्तु तद्धेतुभिन्नहेत्वन्तरोद्भवा । इय स्यात्तिमिराभावे न हीन्दुद्वयदर्शनम् ॥ ३६ ॥
न चासदेव तद्धेतुर्बोधमात्र न वा(चा)ऽपि तत् । स(त)दैव क्लिष्टतापत्तिरिति मुक्तिर्न युज्यते ॥ ३७ ॥
मुक्त्यभावे च सर्वैव ननु चिन्ता निरर्थिका । भावेऽपि सर्वदा तस्या सम्यगेतद्विचिन्त्यताम् ॥ ३८ ॥
विज्ञानमात्रवादोऽय नेत्थ युक्त्योपपद्यते । प्राज्ञस्याभिनिवेशो न तस्मादत्रापि युज्यते ॥ ३९ ॥
६ यच्चोक्त पूर्वमत्रैव क्षणिकत्वप्रसाधकम् । नाशहेतोरयोगादि तदिदानीं परीक्ष्यते ॥ १ ॥ ४१४ ॥
हेतोः स्यान्नश्वरो भावोऽनश्वरो वा विकल्पयन् । नाशहेतोरयोगित्वमुच्यते तन्न युक्तिमत् ॥ २ ॥
हेतु प्रतीत्य यदसौ तथा नश्वर इष्यते । यथैव भवतो हेतुर्विशिष्टफलसाधक ॥ ३ ॥ ४१६ ॥

तथास्वभाव एवासौ स्वहेतोरेव जायते । सहकारिणमासाद्य यस्तथाविधकार्यकृत् ॥ ४ ॥ ४१७ ॥
न पुनः क्रियते किञ्चित्तेनास्य सहकारिणा । समानकालभावित्वात्तथा चोक्तमिदं तव ॥ ५ ॥
उपकारी विरोधी च सहकारी च यो मतः । प्रबन्धापेक्षया सर्वो नैककाले कथञ्चन ॥ ६ ॥
सहकारिकृतो हेतोर्विशेषो नास्ति यद्यपि । फलस्य तु विशेषोऽस्ति तत्कृतातिशयाश्रितः ॥ ७ ॥
न चास्यातत्स्वभावत्वे सफलस्यापि युज्यते । सभागक्षणजन्मासेस्तथाविधतदन्यवत् ॥ ८ ॥
अस्थानपक्षपातश्च हेतोरनुपकारिणि । अपेक्षायां नियुङ्क्ते यत्कार्यमेतद्वृथोदितम् ॥ ९ ॥
यस्मात्तस्याप्यदस्तुल्यं विशिष्टफलसाधकम् । भावहेतुं समाश्रित्य ननु न्यायान्निदर्शितम् ॥ १० ॥
एवं च व्यर्थमेवेह व्यतिरिक्तादिचिन्तनम् । नाश्यमाश्रित्य नाशस्य क्रियते यद्विचक्षणैः ॥ ११ ॥
किञ्च निर्हेतुके नाशे हिंसकत्वं न युज्यते । व्यापाद्यते सदा यस्मान्न कश्चित्केनचित्कचित् ॥ १२ ॥
कारणत्वात् स सन्तानविशेषप्रभवस्य चेत् । हिंसकस्तन्न सन्तानसमुत्पत्तेरसम्भवात् ॥ १३ ॥
सांवृतत्वाद्व्ययोत्पादौ सन्तानस्य खपुष्पवत् । न स्तस्तदधर्मत्वाच्च हेतुस्तत्प्रभ(त्सम्भ)वे कुतः ।१४।४२७।

विसभागक्षणस्याय जनको हिंसको न तत् । स्वतोऽपि तस्य तद्भातेर्जनकस्याविशेषत ॥१५॥४२८॥
हन्म्येनमिति सक्लेशाद्धिंसकश्चेत्प्रकल्प्यते । नैव स्वज्ञीतितो यस्मादयमेव न युज्यते ॥ १६ ॥
सक्लेशो यद्गुणोत्पाद स चाक्लिष्टस्य केवलात् । न चान्यसचिवस्यापि तस्यानातिशयाच्चत ॥ १७ ॥
त प्राप्य तत्स्वभावत्वाच्चत स इति चेन्ननु । नाशहेतुमवाप्यैव नाशपक्षेऽपि न क्षति ॥ १८ ॥
अन्ये तु जन्यमाश्रित्य सत्स्वभावाद्यपेक्षया । एवमाहुरहेतुत्व जनकस्यापि सर्वथा ॥ १९ ॥
न सत्स्वभावजनकस्तद्वैफल्यप्रसङ्गत । जन्माद्ययोगादिदोषाच्च नेतरस्यापि युज्यते ॥ २० ॥
न चोभयादिभावस्य विरोधासम्भवादित । स्वानिवृत्त्यादिभावादौ कार्याभावादितोऽपरे ॥ २१ ॥
न चाध्यक्षविरुद्धत्व जनकत्वस्य मानत । असिद्धेरत्र नीत्या तद्व्यवहारनिषेधत ॥ २२ ॥
मानाभावे परेणापि व्यवहारो निषिध्यते । सज्ज्ञानशब्दविषयस्तद्वदत्रापि दृश्यताम् ॥ २३ ॥
अर्थक्रियासमर्थत्व क्षणिके यच्च गीयते । उत्पत्त्यनन्तर नाशाद्विज्ञेय तदयुक्तिमत् ॥ २४ ॥
अर्थक्रिया यतोऽसौ वा तदन्या वा द्वयी गति । तत्त्वे न तत्र सामर्थ्यमन्यतस्तत्समुद्भवात् ।२५।४३८।

न स्वसन्धारणे न्यायाजन्मानन्तरनाशतः। न च नाशोऽपि सद्युक्त्या तद्धेतोस्तत्समुद्भवात् ॥२६।४३९॥
अन्यत्वेऽन्यस्य सामर्थ्यमन्यत्रेति न सङ्गतम्। ततोऽन्यभाव एवैतन्नासौ न्याय्यो दलं विना ॥ २७ ॥
नासत्सज्जायते यस्मादन्यसत्त्वस्थितावपि। तस्यैव तु तथाभावे नन्वसिद्धोऽन्वयः कथम् ॥ २८ ॥
भूतिर्येषां क्रिया सोक्ता न चासौ युज्यते क्वचित्। कर्तृभोक्तृस्वभावत्वविरोधादिति चिन्त्यताम् ॥२९॥
न चातीतस्य सामर्थ्यं तस्यामिति निदर्शितम्। न चान्यो लौकिकः कश्चिच्छब्दार्थोऽत्रेत्ययुक्तिमत् ॥३०॥
परिणामोऽपि नो हेतुः क्षणिकत्वप्रसाधने। सर्वदैवान्यथात्वेऽपि तथाभावोपलब्धितः ॥ ३१ ॥
नार्थान्तरगमो यस्मात्सर्वथैव न चागमः। परिणामः प्रमासिद्ध इष्टश्च खलु पण्डितैः ॥ ३२ ॥
यच्चेदमुच्यते ब्रूमोऽतादवस्थ्यमनित्यताम्। एतत्तदेव न भवत्यतोऽन्यत्वे ध्रुवोऽन्वयः ॥ ३३ ॥
तदेव न भवत्येतत्तच्चेन्न भवतीति च। विरुद्धं हन्त किञ्चान्यदादिमत्तत्प्रसज्यते ॥ ३४ ॥
क्षीरनाशश्च दध्येव यद्दृष्टं गोरसान्वितम्। न तु तैलाद्यतः सिद्धः परिणामोऽन्वयावहः ॥ ३५ ॥
नासत्सज्जायते जातु सच्चासत्सर्वथैव हि। शक्त्यभावादिति व्याप्तेः सत्स्वभावत्वहानितः ॥३६॥४४९॥

निस्येतरदतो न्यायात्तचयाभावतो हि तत्। प्रतीतिसाचिवारसम्यक् परिणामेन गम्यते ॥३७॥४५०॥
अन्ते क्षयेक्षण चाप्यक्षणक्षयप्रसाधनम्। तस्यैव तत्स्वभावत्वाद्युज्यते न कदाचन ॥ ३८ ॥
आदौ क्षयस्वभावे च तत्रान्ते दर्शन कथम्। तुल्यापरापरोत्पत्तिविप्रलम्भाद्यथोदितम् ॥ ३९ ॥
अन्ते क्षयेक्षणादादौ क्षयोऽदृष्टोऽनुमीयते। सदृशेनावरुद्धत्वात्तद्ग्रहाद्धि तदग्रह ॥ ४० ॥
एतदप्यसदेवेति सदृशो भिन्न एव यत्। भेदाग्रहे कथ तस्य तत्स्वभावत्वतो ग्रहः ॥ ४१ ॥
तदर्थनियतोऽसौ यद्भेदमन्याग्रहाद्धि तत्। न गृह्णातीति चेत्तुल्य सोऽपरेण कुतो गति ॥ ४२ ॥
तथागतेरभावे च वचस्तुच्छमिद ननु। सदृशेनावरुद्धत्वात्तद्ग्रहाद्धि तदग्रह ॥ ४३ ॥
भावे चास्या बलादेकमनेकग्रहणात्मकम्। अन्वयि ज्ञानमेष्टव्य सर्वं तत्क्षणिक कुत ॥ ४४ ॥
ज्ञानेन गृह्यते चार्थो न चापि परदर्शने। तदभावेनु (तु) तद्भावात्कदाचिदपि तत्त्वत ॥ ४५ ॥
ग्रहणेऽपि यदा ज्ञानमुदे(पै)त्युत्पत्त्यनन्तरम्। तदा तत्तस्य जानाति क्षणिकत्व कथ ननु॥ ४६ ॥
तस्यैव तत्स्वभावत्वात् स्वात्मनैव तदुद्भवात्। यथा नीलादिताभ्रान्त्याप्येतन्मिथ्यात्वसंशयात्।४७।४६०।

न चापि स्वानुमानेन धर्मभेदस्य सम्भवात्। लिङ्गधर्मातिपाताच्च तत्स्वभावाद्ययोगतः ॥४८॥४६१॥
नित्यस्यार्थक्रियायोगोऽप्येवं युक्त्या न गम्यते । सर्वमेवाविशेषेण विज्ञानं क्षणिकं यतः ॥ ४९ ॥
तथा चित्रस्वभावत्वान्न चार्थस्य न युज्यते । अर्थक्रिया ननु न्यायात्क्रमाक्रमविभाविनी ॥ ५० ॥
अन्ये त्वभिदधत्येवमेतदास्थानिवृत्तये । क्षणिकं सर्वमेवेति बुद्धेनोक्तं न तत्त्वतः ॥ ५१ ॥
विज्ञानमात्रमप्येवं वाह्यसङ्गनिवृत्तये । विनेयान् कांश्चिदाश्रित्य यद्वा तद्देशनार्हतः ॥ ५२ ॥
न चेतदपि न न्याय्यं यतो बुद्धो महामुनिः । सुवैद्यवद्विना कार्यं द्रव्यासत्यं न भाषते ॥ ५३ ॥
ब्रुवते शून्यमन्ये तु सर्वमेव विचक्षणाः । न नित्यं नाप्यनित्यं यद्वस्तु युक्त्योपपद्यते ॥ ५४ ॥
नित्यमर्थक्रियाभावात्क्रमाक्रमविरोधतः । अनित्यमपि चोत्पादव्ययाभावान्न जातुचित् ॥ ५५ ॥
उत्पादव्ययबुद्धिश्च भ्रान्तानन्दादिकारणम् । कुमार्याः स्वप्नवज्ज्ञेया पुत्रजन्मादिबुद्धिवत् ॥ ५६ ॥
अत्राप्यभिदधत्यन्ये किमित्थं तत्त्वसाधनम् । प्रमाणं विद्यते किञ्चिदाहोस्विच्छून्यमेव हि ॥ ५७ ॥
शून्यं चेत्सुस्थितं तत्त्वमस्ति चेच्छून्यता कथम्। तस्यैव ननु सद्भावादिति सम्यग्विचिन्त्यताम्।५८।४७१।

निस्येतरदतो न्यायात्तथाभावतो हि तत्। प्रतीतिसाचिवारसम्यक् परिणामेन गम्यते ॥३७॥४५०॥
अन्ते क्षयेक्षण चाव्यक्षणक्षयप्रसाधनम्। तस्यैव तत्स्वभावत्वाद्युज्यते न कदाचन ॥ ३८ ॥
आदौ क्षयस्वभावे च तत्रान्ते दर्शन कथम्। तुल्यापरापरोत्पत्तिविप्रलम्भाद्यथोदितम् ॥ ३९ ॥
अन्ते क्षयेक्षणादादौ क्षयोऽदृष्टोऽनुमीयते। सदृशेनावरुद्धत्वात्तद्ग्रहाद्धि तदग्रह ॥ ४० ॥
एतदप्यसदेवेति सदृशो भिन्न एव यत्। भेदाग्रहे कथ तस्य तत्स्वभावत्वतो ग्रह ॥ ४१ ॥
तदर्थनियतोऽसौ यद्भेदमन्याग्रहाद्धि तत्। न गृह्णातीति चेत्तुल्य सोऽपरेण कुतो गति ॥ ४२ ॥
तथागतेरभावे च वचस्तुच्छमिद ननु। सदृशेनावरुद्धत्वात्तद्ग्रहाद्धि तदग्रह ॥ ४३ ॥
भावे चास्या बलादेकमनेकग्रहणात्मकम्। अन्वयि ज्ञानमेष्टव्य सर्वं तत्क्षणिक कुत ॥ ४४ ॥
ज्ञानेन गृह्यते चार्थो न चापि परदर्शने। तदभावेनु (तु) तद्भावात्कदाचिदपि तत्त्वत ॥ ४५ ॥
ग्रहणेऽपि यदा ज्ञानमुदे(पै)त्युत्पत्त्यनन्तरम्। तदा तत्तस्य जानाति क्षणिकत्व कथ ननु॥ ४६ ॥
तस्यैव तत्स्वभावत्वात् स्वात्मनैव तदुद्भवात्। यथा नीलादिताभ्रान्त्यामेतन्मिथ्यात्वसशयात्।४७।४६०।

किञ्च स्याद्वादिनो नैव युज्यते निश्चयः क्वचित्। स्वतन्त्रापेक्षया तस्य न मानं मानमेव यत् ।७।४८३।
संसार्यपि न संसारी मुक्तोऽपि न स एव हि । तदतद्रूपभावेन सर्वमेवाव्यवस्थितम् ॥ ८ ॥
त आहुर्मुकुटोत्पादो न घटनाशधर्मकः । स्वर्णान्नचा (वा)ऽन्य एवेति न विरुद्धं मिथस्त्रयम् ॥ ९ ॥
न चोत्पादव्ययौ न स्तो ध्रौव्यवत्तद्धिया गतेः। नास्तित्वे तु तयोर्ध्रौव्यं तत्त्वतोऽस्तीति न प्रमा ॥ १० ॥
न नास्ति ध्रौव्यमप्येवमविगानेन तद्गतेः । अस्याश्च भ्रान्ततायां न जगत्यभ्रान्ततागतिः ॥ ११ ॥
उत्पादोऽभूतभवनं स्वहेत्वन्तरधर्मकम् । तथाप्रतीतियोगेन विनाशस्तद्विपर्ययः ॥ १२ ॥
तथैतदुभयाधारस्वभावे(वं) ध्रौव्यमित्यपि । अन्यथा त्रितयाभाव एकदैकत्र किं न तत् ॥ १३ ॥
एकत्रैवैकदैवैतदित्थं त्रयमपि स्थितम् । न्याय्यं भिन्ननिमित्तत्वात्तदभेदे न युज्यते ॥ १४ ॥
इष्यते च परैर्मोहात्तत्क्षणास्थितिधर्मिणि । अभावेऽन्यतमस्यापि तत्र तत्त्वं न यद्भवेत् ॥ १५ ॥
भावमात्रं तदिष्टं चेत्तदित्थं निर्विशेषणम् । क्षणास्थितिस्वभावं तु न ह्युत्पादव्ययौ विना ॥ १६ ॥
तदित्थम्भूतमेवेति द्राग्नभस्तो न जातुचित्। भूत्वाभावश्च नाशोऽपि तदेवेति न लौकिकम् ॥१७॥४९३॥

प्रमाणमन्तरेणापि स्यादेवं तत्त्वसंस्थितिः। अन्यथा नेति सुव्यक्तमिदमीश्वरचेष्टितम् ॥५९॥४७२॥
उक्तं विहाय मानं चेच्छून्यतान्यस्य वस्तुनः। शून्यत्वे प्रतिपाद्यस्य ननु व्यर्थः परिश्रमः ॥ ६० ॥
तस्याप्यशून्यतायां च प्राश्निकानां बहुत्वतः। प्रभूता शून्यतापत्तिरनिष्टा सम्प्रसज्यते ॥ ६१ ॥
यावतामस्ति तन्मानं प्रतिपाद्यास्तथा च ये। सन्ति ते सर्व एवेति प्रभूतानामशून्यता ॥ ६२ ॥
एवं च शून्यवादोऽपि तद्विनेयानुगुण्यतः। अभिप्रायत इत्युक्तो लक्ष्यते तत्त्ववेदिना ॥ ६३ ॥
७ अन्ये त्वाहुरनाद्येव जीवाजीवात्मकं जगत्। सदुत्पादव्ययध्रौव्ययुक्तं शास्त्रकृतश्रमाः ॥१॥४७७॥
घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम्। शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥ २ ॥
पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः। अगोरसव्रतो नोभे तस्मात्तत्त्वं त्रयात्मकम् ॥ ३ ॥
अत्राप्यभिदधत्यन्ये विरुद्धं हि मिथस्त्रयम्। एकत्रैवैकदा नैतद् घटां प्राञ्चति जातुचित् ॥ ४ ॥
उत्पादोऽभूतभवनं विनाशस्तद्विपर्ययः। ध्रौव्यं चोभयशून्यं यदेकदैकत्र तत्कथम् ॥ ५ ॥
शोकप्रमोदमाध्यस्थ्यमुक्तं यच्चात्र साधनम्। तदप्यसाम्प्रतं यत्तद्वासनाहेतुकं मतम् ॥६॥४८२॥

किञ्च स्याद्वादिनो नैव युज्यते निश्चयः क्वचित्। स्वतन्त्रापेक्षया तस्य न मानं मानमेव यत् ।७।४८३।

संसार्यपि न संसारी मुक्तोऽपि न स एव हि । तदतद्रूपभावेन सर्वमेवाव्यवस्थितम् ॥ ८ ॥

त आहुर्मुकुटोत्पादो न घटनाशधर्मकः । स्वर्णान्नचा (वा)ऽन्य एवेति न विरुद्धं मिथस्त्रयम् ॥ ९ ॥

न चोत्पादव्ययौ न स्तो ध्रौव्यवत्तद्धिया गतेः। नास्तित्वे तु तयोर्ध्रौव्यं तत्त्वतोऽस्तीति न प्रमा ॥ १० ॥

न नास्ति ध्रौव्यमप्येवमविगानेन तद्गतेः । अस्याश्च भ्रान्ततायां न जगत्यभ्रान्ततागतिः ॥ ११ ॥

उत्पादोऽभूतभवनं स्वहेत्वन्तरधर्मकम् । तथाप्रतीतियोगेन विनाशस्तद्विपर्ययः ॥ १२ ॥

तथैतदुभयाधारस्वभावे(वं) ध्रौव्यमित्यपि । अन्यथा त्रितयाभाव एकदैकत्र किं न तत् ॥ १३ ॥

एकत्रैवैकदैवैतदित्थं त्रयमपि स्थितम् । न्याय्यं भिन्ननिमित्तत्वात्तदभेदे न युज्यते ॥ १४ ॥

इष्यते च परैर्मोहात्तत्क्षणास्थितिधर्मिणि । अभावेऽन्यतमस्यापि तत्र तत्त्वं न यद्भवेत् ॥ १५ ॥

भावमात्रं तदिष्टं चेत्तदित्थं निर्विशेषणम् । क्षणास्थितिस्वभावं तु न ह्युत्पादव्ययौ विना ॥ १६ ॥

तदित्थम्भूतमेवेति द्राग्भवस्तो न जातुचित्। भूत्वाभावश्च नाशोऽपि तदेवेति न लौकिकम्॥१७॥४९३॥

वासनाहेतुक यच्च शोकादि परिकीर्तितम् । तदयुक्त यतश्चित्रा सा न जात्वनिबन्धना ॥१८॥४९४॥
सदा भावेतरापत्तिरेकभावाच्च वस्तुनः । तद्भावेऽतिप्रसङ्गादिनियमात् सम्प्रसज्यते ॥ १९ ॥
न मान मानमेवेति सर्वथा निश्चयश्च य । उक्तो न युज्यते सोऽपि यदेकान्तनिबन्धन ॥ २० ॥
मान चेन्मानमेवेति प्रत्यक्ष लैङ्गिक न तु । तत्तच्चेन्मानमेवेति स्यात्तद्भावादृते कथम् ॥ २१ ॥
न स्वसत्त्व परासत्त्व तदसत्त्वविरोधत । स्वसत्त्वासत्त्ववन्न्यायाच्च च नास्त्येव तत्र तत् ॥ २२ ॥
परिकल्पितमेतच्चेन्नन्वित्थ तत्त्वतो न तत् । तत क इह दोषश्चेन्ननु(तु)तद्भावसङ्गति ॥ २३ ॥
अनेकान्तत एवात सम्यग्मानव्यवस्थिते । स्याद्वादिनो नियोगेन युज्यते निश्चय परम् ॥ २४ ॥
एतेन सर्वमेवेति यदुक्तं तन्निराकृतम् । शिष्यव्युत्पत्तये किञ्चित्तथाप्यपरमुच्यते ॥ २५ ॥
ससारी चेत्स एवेति कथ मुक्तस्य सम्भव । मुक्तोऽपि चेत्स एवेति व्यपदेशोऽनिबन्धनः ॥ २६ ॥
ससाराद्विप्रमुक्तो यन्मुक्त इत्यभिधीयते । नैतत्तस्यैव तद्भावमन्तरेणोपपद्यते ॥ २७ ॥
तस्यैव च तथाभावे तन्निवृत्तीतरात्मकम् । द्रव्यपर्यायवद्वस्तु बलादेव प्रसिध्यति ॥ २८ ॥५०४॥

लज्जते बाल्यचरितैर्बाल एव न चापि यत् । युवा न लज्जते चान्यस्तैरायत्यैव चेष्टते ॥२९॥५०५॥
युवैव न च वृद्धोऽपि नान्यार्थं चेष्टनं च तत् । अन्वयादिमयं वस्तु तदभावोऽन्यथा भवेत् ॥ ३० ॥
अन्वयो व्यतिरेकश्च द्रव्यपर्यायसंज्ञितौ । अन्योन्यव्याप्तितो भेदाभेदवृत्त्यैव वस्तु तौ ॥ ३१ ॥
नान्योन्यव्याप्तिरेकान्तभेदेऽभेदे च युज्यते । अतिप्रसङ्गादैक्याच्च शब्दार्थानुपपत्तितः ॥ ३२ ॥
अन्योन्यमिति यद्भेदं व्याप्तिश्चाह विपर्ययम् । भेदाभेदे द्वयोस्तस्मादन्योन्यव्याप्तिसम्भवः ॥ ३३ ॥
एवं न्यायाविरुद्धेऽस्मिन् विरोधोद्भावनं नृणाम् । व्यसनं वा जडत्वं वा प्रकाशयति केवलम् ॥ ३४ ॥
न्यायात् खलु विरोधो यः स विरोध इहोच्यते । यद्वदेकान्तभेदादौ तयोरेवाप्रसिद्धितः ॥ ३५ ॥
मृद्द्रव्यं यन्न पिण्डादिधर्मान्तरविवर्जितम् । यद्वा तेन विनिर्मुक्तं केवलं गम्यते क्वचित् ॥ ३६ ॥
ततोऽसत्तत्तथान्यायादेकं चोभयसिद्धितः। अन्यत्रातो विरोधस्तदभावापत्तिलक्षणः ॥ ३७ ॥
जात्यन्तरात्मके चास्मिन्नानवस्थादिदूषणम् । नियतत्वाद्विविक्तस्य भेदादेश्चाप्यसम्भवात् ॥ ३८ ॥
नाभेदो भेदरहितो भेदो वाऽभेदवर्जितः । केवलोऽस्ति यतस्तेन कुतस्तत्र विकल्पनम् ॥३९॥५१५॥

येनाकारेण भेद र्कि तेनासावेव किं द्वयम् । असत्त्वात्केवलस्येह सतश्च कथितत्वत ॥ ४० ॥
यतश्च तत्प्रमाणेन गम्यते ह्युभयात्मकम् । अतोऽपि जातिमात्र तदनवस्थादिकल्पनम् ॥ ४१ ॥
एव ह्युभयदोषादिदोषा अपि न दूषणम् । सम्यग्जात्यन्तरत्वेन भेदाभेदप्रसिद्धित ॥ ४२ ॥
एतनेतत्प्रतिक्षिप्त यदुक्त पूर्ववादिभिः । विहायानुभव मोहाज्जातियुक्त्यनुसारिभि ॥ ४३ ॥
द्रव्यपर्याययोर्भेदे नैकस्योभयरूपता । अभेदेऽन्यतरस्यानानिवृत्ती चिन्त्यतां कथम् ॥ ४४ ॥
यन्निवृत्तौ न यस्येह निवृत्तिस्तत्ततो यत । भिन्न नियमतो दृष्ट यथा कर्कः क्रमेलकात् ॥ ४५ ॥
निवर्तते च पर्यायो न तु द्रव्य ततो न स । अभिन्नो द्रव्यतोऽभेदेऽनिवृत्तिस्तत्स्वरूपवत् ॥ ४६ ॥
प्रतिक्षिप्त च यद्भेदाभेदपक्षोऽन्य एव हि । भेदाभेदविकल्पाभ्या हन्त जात्यन्तरात्मक ॥ ४७ ॥
जात्यन्तरात्मक चैव (न) दोषास्ते समियु कथम् । भेदाभेदे च येऽत्यन्त जातिभिन्ने व्यवस्थिता ॥४८॥
किञ्चिन्निवर्ततेऽवश्य तस्याप्यन्यत्तथा न तत् । अतस्तद्भेद एवेह (मात्र)निवृत्त्याद्यन्यथा कथम् ॥४९॥
तस्येति योगसामर्थ्याद्भेद एवेति भावितम् । अभिन्नदेशस्तस्येति यच्चह्व्याप्त्या तयोच्यते ॥५०॥५२६॥

॥५१॥५२७॥

अतस्तद्भेद एवेति प्रतीतिविमुखं वचः । तस्यैव च तथाभावात्तन्निवृत्तीतरात्मकम् ॥ ५२ ॥

नानुवृत्तिनिवृत्तिभ्यां विना यदुपपद्यते । तस्यैव हि तथाभावः सूक्ष्मबुद्धया विचिन्त्यताम् ॥ ५३ ॥

तस्यैव तु य(त)थाभावे तदेव हि यतस्तथा । भवत्यतो न दोषो नः काश्चिदप्युपपद्यते ॥ ५४ ॥

इत्थमालोचनं चेदमन्वयव्यतिरेकवत् । वस्तुनस्तत्स्वभावत्वात्तथाभावप्रसाधकम् ॥५५॥

न च भेदोऽपि बाधायै तस्यानेकान्तवादिनः। जात्यन्तरात्मकं वस्तु नित्यानित्यं यतो मतम् ॥ ५६ ॥

प्रत्यभिज्ञाबलाच्चैतदित्थं समवसीयते । इयं च लोकसिद्धैव तदेवेदमिति क्षितौ ॥ ५७ ॥

न युज्यते च सन्न्यायादृते तत्परिणामिताम् । कालादिभेदतो वस्त्वभेदतश्च तथागतेः ॥ ५८ ॥

एकान्तैक्ये न नाना यन्नानात्वे चैकमप्यदः । अतः कथं नु तद्भावस्तदेतदुभयात्मकम् ॥ ५९ ॥

तस्यैव तु तथाभावे कथञ्चिद्भेदयोगतः । प्रमातुरपि तद्भावाद्युज्यते मुख्यवृत्तितः ॥ ६० ॥

नित्यैकयोगतो व्यक्तिभेदेप्येषा न सङ्गता । तदिहेति प्रसङ्गेन तदेवेदमयोगतः ॥६१॥५३७॥

साद्दश्याज्ञानतो न्याय्या न विभ्रमबलादपि। एतद्द्वयाग्रहे युक्तं न च साद्दश्यकल्पनम्

न च भ्रान्तापि सद्बाधा भावादेव कदाचन । योगिप्रत्ययसद्भावे प्रमाणं नास्ति किञ्चन ॥६२॥५३८॥
नाना योगी विजानात्यनाना नेत्यत्र न प्रमा । देशनाया विनेयानुगुण्येनापि प्रवृत्तित ॥ ६३ ॥
या च लूनपुनर्जातनखकेशतृणादिषु । इय सलक्ष्यते सापि तदाभासा न सैव हि ॥ ६४ ॥
प्रत्यक्षाभावभावेऽपि नाप्रमाण यथैव हि । प्रत्यक्ष तद्वदेवेय प्रमाणमवगम्यताम् ॥ ६५ ॥
मतिज्ञानविकल्पत्वान्न चानिष्टिरिय यत । एतद्बलात्ततः सिद्ध नित्यानित्यादि वस्तुन ॥ ६६ ॥

८ अन्ये त्वद्वैतमिच्छन्ति सद्ब्रह्मादिव्यपेक्षया । सतो यद्भेदक नान्यत्तच्च तन्मात्रमेव हि ॥१॥५४३॥
यथा विशुद्धमाकाशं तिमिरोपप्लुतो जन । सङ्कीर्णमिव मात्राभिर्भिन्नाभिरभिमन्यते ॥ २ ॥
तथेदममल ब्रह्म निर्विकल्पमविद्यया । कलुषत्वमिवापन्न भेदरूप प्रकाशते ॥ ३ ॥
अत्राप्यन्ये वदन्त्येवमविद्या न सतः पृथक् । तच्च तन्मात्रमेवेति भेदाभासोऽनिबन्धनः ॥ ४ ॥
सैवाथाभेदरूपापि भेदाभासनिबन्धनम् । प्रमाणमन्तरेणैतदवगन्तु न शक्यते ॥ ५ ॥
भावेऽपि च प्रमाणस्य प्रमेयव्यतिरेकतः । ननु नाद्वैतमेवेति तदभावे प्रमाणकम् ॥ ६ ॥ ५४८ ॥

प्रतीत्या च विचिन्त्यताम् ॥७॥५४९॥
विद्याविद्यादिभेदाच्च स्वतन्त्रेणैव बाध्यते । तत्संशयादियोगाच्च
अन्ये व्याख्यानयन्त्येवं समभावप्रसिद्धये । अद्वैतदेशना शास्त्रे निर्दिष्टा न तु तत्त्वतः ॥ ८ ॥
न चैतद्बाध्यते युक्त्या सच्छास्त्रादिव्यवस्थितेः । संसारमोक्षभावाच्च तदर्थं यत्नासिद्धितः ॥ ९ ॥
अन्यथा तत्त्वतोऽद्वैते हन्त संसारमोक्षयोः । सर्वानुष्ठानवैयर्थ्यमनिष्टं सम्प्रसज्यते ॥ १० ॥
अन्ये पुनर्वदन्त्येवं मोक्ष एव न विद्यते । उपायाभावतः किं वा न सदा सर्वदेहिनाम् ॥ ११ ॥
कर्मादिपरिणत्यादिसापेक्षो यद्यसौ ततः । अनादिमत्त्वात्कर्मादिपरिणत्यादिकं तथा ॥ १२ ॥
तस्यैव चित्ररूपत्वात्तत्तथेति न युज्यते । उत्कृष्टाद्या स्थितिस्तस्य यज्जातानेकशः किल ॥ १३ ॥
अत्रापि वर्णयन्त्यन्ये विद्यते दर्शनादिकः । उपायो मोक्षतत्त्वस्य परः सर्वज्ञभाषितः ॥ १४ ॥
दर्शनं मुक्तिबीजं च सम्यक्त्वं तत्त्ववेदनम् । दुःखान्तकृत् सुखारम्भः पर्यायास्तस्य कीर्तिताः ॥ १५ ॥
अनादिभव्यभावस्य तत्स्वभावत्वयोगतः । उत्कृष्टाद्यास्वतीतासु तथाकर्मस्थितिष्वलम् ॥ १६ ॥
तद्दर्शनमवाप्नोति कर्मग्रन्थिं सुदारुणम् । निर्भिद्य शुभभावेन कदाचित्कश्चिदेव हि ॥१७॥५५९॥

सति चास्मिन्नसौ धन्य सम्यग्दर्शनसयुत । तत्त्वश्रद्धानपूतात्मा रमते न भवोदधौ ॥१८॥५६०॥
स पश्यत्यस्य यद्रूप भावतो बुद्धिचक्षुषा । सम्यक्शास्त्रानुसारेण रूप नष्टाक्षिरोगवत् ॥ १९ ॥
तद्दृष्ट्वा चिन्तयत्येवं प्रशान्तेनान्तरात्मना । भावगर्भं यथाभाव पर सवेगमाश्रित ॥ २० ॥
जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुत । क्लेशाय केवल पुसामहो भीमो भवोदधि ॥ २१ ॥
सुखाय तु पर मोक्षो जन्मादिक्लेशवर्जित । भयशक्त्या विनिर्मुक्तो व्याबाधावर्जितः सदा ॥ २२ ॥
हेतुर्भवस्य हिंसादिर्दु खाद्यन्वयदर्शनात् । मुक्ते पुनरहिंसादिर्व्याबाधाविनिश्चित ॥ २३ ॥
बुद्ध्वैव भवनैर्गुण्य मुक्तेश्च गुणरूपताम् । तदर्थं चेष्टते नित्य विशुद्धात्मा यथागमम् ॥ २४ ॥
दुष्कर क्षुद्रसत्त्वानामनुष्ठान करोत्यसौ । मुक्तौ दृढानुरागत्वात् कामीव वनितान्तरे ॥ २५ ॥
उपादेयविशेषस्य न यत्सम्यक्प्रसाधनम् । दुनोति चेतोऽनुष्ठान तद्भावप्रतिबन्धतः ॥ २६ ॥
ततश्च दुष्करं तन्न सम्यगालोच्यते यदा । अतोऽन्यद्दुष्कर न्यायाद्ध्येयवस्तुप्रसाधकम् ॥ २७ ॥
व्याधिग्रस्तो यथारोग्यलेशमास्वादयन्बुध । कष्टेऽप्युपक्रमे धीरः सम्यक्प्रीत्या प्रवर्तते ॥२८॥५७०॥

संसारव्याधिना ग्रस्तस्तद्वज्ज्ञेयो नरोत्तमः । शमारोग्यलवं प्राप्य भावतस्तदुपक्रमे ॥ २९ ॥ ५७१ ॥
प्रवर्तमान एवञ्च यथाशक्ति स्थिराशयः । शुद्धं चारित्रमासाद्य केवलं लभते क्रमात् ॥३०॥ युग्मम् ॥
ततः स सर्वविद्भूत्वा भवोपग्राहिकर्मणः । ज्ञानयोगात्क्षयं कृत्वा मोक्षमाप्नोति शाश्वतम् ॥ ३१ ॥
ज्ञानयोगस्तपः शुद्धमित्यादि यदुदीरितम् । ऐदम्पर्येण भावार्थस्तस्यायमभिधीयते ॥ ३२ ॥
ज्ञानयोगस्य योगीन्द्रैः पराकाष्ठा प्रकीर्तिता । शैलेशीसंज्ञितं स्थैर्यं ततो मुक्तिरसंशयम् ॥ ३३ ॥
धर्मस्तच्चात्मधर्मत्वान्मुक्तिदः शुद्धिसाधनात् । अक्षयोऽप्रतिपातित्वात् सदा मुक्तौ तथास्थितेः ॥ ३४ ॥
चारित्रपरिणामस्य निवृत्तिर्न च सर्वथा । सिद्ध उक्तो यतः शास्त्रे न चारित्री न चेतरः ॥ ३५ ॥
न चावस्थानिवृत्त्येह निवृत्तिस्तस्य युज्यते । समयातिक्रमे यद्वात्सिद्धभावश्च तत्र वै ॥ ३६ ॥
ज्ञानयोगादतो मुक्तिरिति सम्यग्व्यवस्थितम् । तन्त्रान्तरानुरोधेन गीतं चेत्थं न दोषकृत् ॥ ३७ ॥
अत्राप्यभिदधत्यन्ये सर्वज्ञो नैव विद्यते । तद्ग्राहकप्रमाभावादिति न्यायानुसारिणः ॥ ३८ ॥
प्रत्यक्षेण प्रमाणेन सर्वज्ञो नैव गृह्यते । लिङ्गमप्यविनाभावि तेन किञ्चिन्न दृश्यते ॥ ३९ ॥ ५८१ ॥

न चागमेन यदसौ विध्यादिप्रतिपादक. । अप्रत्यक्षत्वतो नैवोपमानेनापि गम्यते ॥ ४० ॥ ५८२ ॥
नार्थापत्त्यापि सर्वोऽर्थस्त मिनाप्युपपद्यते । प्रमाणपञ्चकावृत्तेस्तत्राभावप्रमाणता ॥ ४१ ॥
धर्माधर्मव्यवस्था तु वेदाख्यादागमात् किल । अपौरुषेयोऽसौ यस्माद्धेतुदोषविवर्जितः ॥ ४२ ॥
आह चालोकवद्वेदे सर्वसाधारणे सति । धर्माधर्मपरिज्ञाता किमर्थं कल्प्यते नर ॥ ४३ ॥
इष्टापूर्त्तादिभेदोऽस्मात्सर्वलोकप्रतिष्ठितः । व्यवहारप्रसिद्ध्यैव यथैव दिवसादय ॥ ४४ ॥
ऋत्विग्भिर्मन्त्रसंस्कारैर्ब्राह्मणानां समक्षतः । अन्तर्वेद्यान्तु यद्दत्तमिष्टं तदभिधीयते ॥ ४५ ॥
वापीकूपतडागानि देवतायतनानि च । अन्नप्रदानमित्येतत्पूर्त्तमित्यभिधीयते ॥ ४६ ॥
अतोऽपि शुक्रु यद्वृत्त निरीहस्य महात्मन । ध्यानादिमोक्षफलद श्रेयस्तदभिधीयते ॥ ४७ ॥
वर्णाश्रमव्यवस्थापि सर्वा तत्प्रभवैव हि । अतीन्द्रियार्थद्रष्टा तन्नास्ति किञ्चित्प्रयोजनम् ॥ ४८ ॥
अत्रापि ब्रुवते केचिदित्थ सर्वज्ञवादिन । प्रमाणपञ्चकावृत्तिः कथ तत्रोपपद्यते ॥ ४९ ॥
सर्वार्थविषय तच्चेत्प्रत्यक्ष तन्निषेधकृत् । अभावः कथमेतस्य न चेदत्राप्यद सम्म ॥ ५० ॥ ५९२ ॥

धर्माद्योऽपि चाध्यक्षा ज्ञेयभावाद्घटादिवत् । कस्यचित्सर्व एवेति नानुमानं न विद्यते ॥५१॥५९३॥
आगमादपि तत्सिद्धिर्यदसौ चोदनाफलम् । प्रामाण्यं च स्वतस्तस्य नित्यत्वं च श्रुतेरिव ॥ ५२ ॥
छद्मताशेपसञ्शीतिनिर्णयात्तद्ग्रहे पुनः । उपमाऽन्यग्रहे तत्र न चान्यत्रापि चान्यथा ॥ ५३ ॥
शास्त्रादतीन्द्रियगतेरर्थापत्त्यापि गम्यते । अन्यथा तत्र नाश्वासश्छद्मस्थस्योपजायते ॥ ५४ ॥
प्रमाणपञ्चकावृत्तिरेवं तत्र न युज्यते । तथाप्यभावप्रामाण्यमिति ध्यान्ध्यविजृम्भितम् ॥ ५५ ॥
वेदाद्धर्मादिसंस्थापि हन्तातीन्द्रियदर्शिनम् । विहाय गम्यते सम्यक्कुत एतद्विचिन्त्यताम् ॥ ५६ ॥
न वृद्धसम्प्रदायेन छिन्नमूलत्वयोगतः । न चार्वाग्दर्शिना तस्यातीन्द्रियार्थोऽवसीयते ॥ ५७ ॥
प्रामाण्यं रूपविषये सम्प्रदाये न युक्तिमत् । यथानादिमदन्धानां तथात्रापि निरूप्यताम् ॥ ५८ ॥
न लौकिकपदार्थेन तत्पदार्थस्य तुल्यता । निश्चेतुं पार्यतेऽन्यत्र तद्विपर्ययभावतः ॥ ५९ ॥
नित्यत्वापौरुषेयत्वाद्यस्ति किञ्चिदलौकिकम् । तत्रान्यत्राप्यतः शङ्का विदुषो न निवर्तते ॥ ६० ॥
तन्निवृत्तौ न चोपायो विनातीन्द्रियवेदिनम् । एवञ्च कृत्वा साध्वेतत्कीर्तितं धर्मकीर्तिना ॥६१॥६०३॥

स्वय रागादिमान्नार्थं वेत्ति वेदस्य नान्यत । न वेदयति वेदोऽपि वेदार्थस्य कुतो गति ॥६२॥६०४॥
तेनाग्निहोत्रं जुहुयात्स्वर्गकाम इति श्रुतौ । खादेच्छ्वमासमित्येष नार्थ इत्यत्र का प्रमा ॥ ६३ ॥
प्रदीपादिवदिष्टश्चेत्तच्छब्दोऽर्थप्रकाशकः । स्वत एव प्रमाण न किञ्चिदत्रापि विद्यते ॥ ६४ ॥
विपरीतप्रकाशश्च ध्रुवमापद्यते क्वचित् । तथाहीन्दीवरे दीप प्रकाशयति रक्तताम् ॥ ६५ ॥
तस्माच्च चाविशेषेण प्रतीतिरुपजायते । सङ्केतसव्यपेक्षस्ते स्वत एवेत्ययुक्तिमत् ॥ ६६ ॥
साधुर्न वेतिसङ्केतो न चाशङ्का निवर्तते । तद्वैचित्र्योपलब्धेश्च स्वाशयाभिनिवेशतः ॥ ६७ ॥
व्याख्याप्यपौरुषेयस्य मानाभावान्न सङ्गता । मिथो विरुद्धभावाच्च तत्साधुत्वाद्यनिश्चिते ॥ ६८ ॥
नान्यप्रमाणसवादात्तत्साधुत्वविनिश्चय । सोऽतीन्द्रिये न यन्न्याय्यस्तत्सद्भावविरोधत ॥ ६९ ॥
तस्माद्व्याख्यानमस्येद स्वाभिप्रायनिवेदनम् । जैमिन्यादेर्न तुल्य किं वचनेनापरेण च(व) ॥ ७० ॥
एष स्थाणुरय मार्ग इति वक्तीह कश्चन । अन्य स्वय ब्रवीमीति तयोर्भेद परीक्ष्यताम् ॥ ७१ ॥
न चाप्यपौरुषेयोऽसौ घटते सूपपत्तित । वक्तृव्यापारवैकल्ये तच्छब्दानुपलब्धितः ॥७२॥६१४॥

अपौरुषेयमिष्टं वो वचो द्रव्यव्यपेक्षया ॥७३॥६१५॥
वक्तृव्यापारभावेऽपि तद्भावे लौकिकं न किम्। नातीन्द्रियार्थद्रष्टारमन्तरेण निवर्तते ॥ ७४ ॥
दृश्यमानेऽपि चाशङ्का दृश्यकर्तृसमुद्भवा । न लोको हि विगानत्वात्तद्बहुत्वाद्यनिश्चितेः ॥ ७५ ॥
पापादत्रेदृशी बुद्धिर्न पुण्यादिति न प्रमा । मानसङ्ख्याविरोधाच्च कथमित्थमिदं ननु ॥ ७६ ॥
बहूनामपि सम्मोहभावान्मिथ्याप्रवर्तनात् । सम्भवद्विषयापि स्यादेवम्भूतार्थकल्पना ॥ ७७ ॥
अतीन्द्रियार्थद्रष्टा तु पुमान् कश्चिद्यदीष्यते । कर्तुरस्मरणादीनां व्यभिचारादिदोषतः ॥ ७८ ॥
अपौरुषेयताप्यस्य नान्यतो ह्यवगम्यते । स्मर्यते च विगानेन हन्तेहाप्यष्टकादिकः ॥ ७९ ॥
नाभ्यास एवमादीनामपि कर्ताऽविगानतः । गौरवापादनार्थं च तथा स्यादनिवेदनम् ॥ ८० ॥
स्वकृताध्ययनस्यापि तद्भावो न विरुध्यते । प्रतीतं सर्वलोकेऽपि न चाप्यव्यभिचारि तत् ॥८१॥
मन्त्रादीनाञ्च सामर्थ्यं शाबराणामपि स्फुटम्। स च मानमतोऽप्यस्यासत्त्वं वक्तुं न युज्यते ॥ ८२ ॥
वेदेऽपि पठ्यते ह्येष महात्मा तत्र तत्र यत् । असाक्षाद्दर्शिनस्तत्र रूपेऽन्धस्येव सर्वथा ॥८३॥६२५॥
न चाप्यतीन्द्रियार्थत्वाज्ज्यायो विषयकल्पनम्।

सर्वज्ञेन ह्यभिव्यक्तात्सर्वार्थादागमात्परा । धर्माधर्मव्यवस्थेयं युज्यते नान्यतः क्वचित् ॥८४॥६२६॥
अत्रापि प्राज्ञ इत्यन्य इत्थमाह सुभाषितम् । दृष्टोऽयमर्थः शक्येत ज्ञातुं सोऽतिशयो यदि ॥ ८५ ॥
अयमेव न वेत्यन्यदोषो निर्दोषतापि वा । दुर्लभत्वात्प्रमाणानां दुर्बोधेत्यपरे विदुः ॥ ८६ ॥
अत्रापि ब्रुवते वृद्धा सिद्धमव्यभिचार्यपि । लोके गुणादिविज्ञानं सामान्येन महात्मना ॥ ८७ ॥
तत्प्रीतिप्रतिपत्त्यादेरन्यथा तन्न युक्तिमत् । विशेषज्ञानमप्येवं तद्वदभ्यासतो न किम् ॥ ८८ ॥
दोषाणां ह्रासदृष्ट्येह तत्सर्वक्षयसम्भवात् । तत्सिद्धौ ज्ञायते प्राज्ञैस्तस्यातिशय इत्यपि ॥ ८९ ॥
छद्मतारोपसत्प्रीतिनिर्णयादिप्रभावतः । तदात्वे वर्तमाने तु तद्व्यक्तार्थाविरोधतः ॥ ९० ॥
न चास्यादर्शनेऽप्यत्र साम्राज्यस्येव नास्तिता । सम्भवो न्याययुक्तस्तु पूर्वमेव निदर्शितः ॥ ९१ ॥
प्रातिभालोचनं तावदिदानीमप्यतीन्द्रिये । सुवैद्यसंयतादीनामविसंवादि दृश्यते ॥ ९२ ॥
एवं तत्रापि तद्भावे न विरोधोऽस्ति कश्चन । तद्व्यक्तार्थाविरोधादौ ज्ञानमावाश्च साम्प्रतम् ॥ ९३ ॥
सर्वत्र दृष्टे संवादाददृष्टे नोपजायते । ज्ञातुर्विसंवादाशङ्का तद्वैशिष्ट्योपलक्षितः ॥ ९४ ॥ ६३६ ॥

वस्तुस्थित्यापि तत्ताहग्न विसंवादकं भवेत्। यथोत्तरं तथादृष्टेरिति चेत्तन्न साम्प्रतम् ॥९५॥६३७॥
सिध्येत्प्रमाणं यद्येवमप्रमाणमथेह किम्। न ह्येकं नास्ति सत्यार्थं पुरुषे बहुभाषिणि ॥ ९६ ॥
यत एकं न सत्यार्थं किन्तु सर्वं यथाश्रुतम्। यत्रागमे प्रमाणं स इष्यते पण्डितैर्जैनैः ॥ ९७ ॥
आत्मनोऽमी(त्मा नामी) पृथक्कर्म तत्संयोगाद्भवोन्यथा। मुक्तिर्हिंसादयो मुख्यास्तन्निवृत्तिः ससाधना॥
अतीन्द्रियार्थसंवादो विशुद्धो भावनाविधिः। यत्रेदं युज्यते सर्वं योगिव्यक्तः स आगमः ॥ ९९ ॥
अधिकार्यपि चास्येह स्वयमज्ञो हि यः पुमान्। कथितज्ञः पुनर्धीमांस्तद्वैयर्थ्यमतोऽन्यथा ॥ १०० ॥
परचित्तादिधर्माणां गत्युपायाभिधानतः। सर्वार्थविषयोऽप्येष इति तद्भावसंस्थितिः ॥ १०१ ॥
अन्ये त्वभिदधत्येवं युक्तिमार्गकृतश्रमाः। शब्दार्थयोर्न सम्बन्धो वस्तुस्थित्येह विद्यते ॥ १०२ ॥
न तादात्म्यं द्वयाभावप्रसङ्गाद्बुद्धिभेदतः। शस्त्राद्युक्तौ मुखच्छेदादिसङ्गात्समयस्थितेः ॥ १०३ ॥
अर्थासन्निधिभावेन तद्दृष्टावन्यथोक्तितः। अन्याभावनियोगाच्च न तदुत्पत्तिरप्यलम् ॥ १०४ ॥
परमार्थैकतानत्वे शब्दानामनिबन्धना। न स्यात्प्रवृत्तिरर्थेषु दर्शनान्तरभेदिषु ॥ १०५ ॥ ६४७ ॥

अतीताजातयोर्वापि न च स्यादनृतार्थता। वाच कस्यचि(स्याश्चि)दित्येषा बौद्धार्थविषया मता॥६४८॥
वाच्य इत्थमपोहस्तु न जातिः पारमार्थिकी। तद्योगाद्विना भेद तदन्येभ्यस्तथास्थिते ॥ १०७ ॥
सति चास्मिन् किमन्येन शब्दात्तत्प्रतीतित । तदभावे न तद्वत्त्व तद्भ्रान्तत्वात्तथा न किम् ॥ १०८ ॥
अभ्रान्ति(न्त)जातिवादे तु न दण्डाद्दण्डिवद्गति । तद्वत्युभयसाङ्कर्ये न भेदाद्वोऽपि तादृशम् ॥ १०९ ॥
अन्ये त्वभिदधत्येव वाच्यवाचकलक्षण । अस्तिशब्दार्थयोर्योगस्तत्प्रतीत्यादितत्त्वतः ॥ ११० ॥
नेतद्दृश्यविकल्पार्थैकीकरणेन भेदत । एकप्रमाणभावाच्च तयोस्तत्त्वाप्रसिद्धितः ॥ १११ ॥
शब्दात्तद्वासनाबोधो विकल्पस्य ततो हि यत् । तदित्यमुच्यतेऽस्माभिर्न ततस्तदसिद्धित ॥ ११२ ॥
विशिष्ट वासनाजन्म बोधस्तच्च न जातुचित् । अन्यतस्तुल्यकालादेर्विशेषोऽन्यस्य नो यतः ॥ ११३ ॥
निष्पन्नत्वादसत्त्वाच्च द्वाभ्यामन्योदयो न स । उपादानाविशेषेण तत्स्वभाव तु तत्कृत ॥ ११४ ॥
न क्षुकवत्स्वहेतोस्तु स्याच्च नाश सहेतुक । इत्थ प्रकल्पने न्यायादत एव न युक्तिमत् ॥ ११५ ॥
अनभ्युपगमाच्चेह तादात्म्यादिसमुद्भवा । न दोषा नो न चान्येऽपि तद्भेदाद्धेतुभेदतः ॥११६॥६५८॥

वन्ध्येतरादिको भेदो रामादीनां यथैव हि। मृषासत्यादिशब्दानां तद्वत्तद्धेतुभेदतः ॥११७॥६५९॥
परमार्थैकतानत्वेप्युक्त(प्यन्य)दोषोपवर्णनम्। प्रत्याख्यातं हि शब्दानामिति सम्याग्विचिन्त्यताम् ।११८।
अन्यदोषो यदन्यस्य युक्त्या युक्तो न जातुचित्। व्यक्तवर्णं न बुद्धानां भिक्ष्वादि शबरादिवत् ॥ ११९ ॥
ज्ञायते तद्विशेषस्तु प्रमाणेतरयोरिव। स्वरूपालोचनादिभ्यस्तथादर्शनतो भुवि ॥ १२० ॥
समयापेक्षणं चेह तत्क्षयोपशमं विना। तत्कर्तृत्वेन सफलं योगिनां तु न विद्यते ॥ १२१ ॥
सर्ववाचकभावत्वाच्छब्दानां चित्रशक्तितः। वाच्यस्य च तथान्यत्र नागोऽस्य समयेऽपि हि ॥ १२२ ॥
अनन्तधर्मकं वस्तु तद्धर्मः कश्चिदेव च। वाच्यो न सर्व एवेति ततश्चैतन्न बाधकम् ॥ १२३ ॥
अन्यदेवेन्द्रियग्राह्यमन्यच्छब्दस्य गोचरः। शब्दात्प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते ॥ १२४ ॥
अन्यथा दाहसम्बन्धाद्दाहं दग्धोऽभिमन्यते। अन्यथा दाहशब्देन दाहार्थः सम्प्रतीयते ॥ १२५ ॥
इन्द्रियग्राह्यतोऽन्योऽपि वाच्योऽसौ न च दाहकृत्। तथाप्रतीतितो भेदाभेदासिद्ध्यैव तत्स्थितेः ॥१२६॥
अपोहस्यापि वाच्यत्वमुपपत्त्या न युज्यते। असत्त्वाद्वस्तुभेदेन बुद्ध्या तस्यापि बोधतः ॥१२७॥६६९॥

क्षणिका सर्वसस्कारा अन्यथैतद्विरुध्यते। अपोहो यत्र सस्कारो न च क्षणिक इष्यते ॥१२८॥६७०॥
एवञ्च वस्तुनस्तत्त्व हन्त शास्त्रादनिश्चितम । तदभावे च सुव्यक्त तदेतत्तुपखण्डनम् ॥ १२९ ॥
वृद्धावर्णेऽपि चादोप सस्तवेऽप्यगुणस्तथा । आह्वानाप्रतिपत्त्यादि शब्दार्थायोगतो ध्रुवम् ॥ १३० ॥
ज्ञानादेव नियोगेन सिद्धिमिच्छन्ति केचन। अन्ये क्रियात एवेति द्वाभ्यामन्ये विचक्षणा ॥ १३१ ॥
ज्ञान हि फलद पुसा न क्रिया फलदा मता । मिथ्याज्ञानात्प्रवृत्तस्य फलप्राप्तेरसम्भवात् ॥ १३२ ॥
ज्ञानहीनाश्च यल्लोके दृश्यन्ते हि महाक्रियाः। ताम्यन्तोऽतिचिर काल क्लेशायासपरायणा ॥ १३३ ॥
ज्ञानवन्तश्च तद्वीर्यात्तत्र तत्र स्वकर्मणि । विशिष्टफलयोगेन सुखिनोऽल्पाक्रिया अपि ॥ १३४ ॥
केवलज्ञानभावे च मुक्तिरप्यन्यथा न यत् । क्रियावतोऽपि यत्नेन तस्माज्ज्ञानादसौ मता ॥ १३५ ॥
क्रियेव फलदा पुसां न ज्ञान फलद मतम् ।यत स्त्रीभक्ष्यभोगज्ञो न ज्ञानात्सुखितो भवेत् ॥ १३६ ॥
क्रियाहीनाश्च यल्लोके दृश्यन्ते ज्ञानिनोऽपि हि । कृपायतनमन्येषां सुखसम्पद्विवर्जिता ॥ १३७ ॥
क्रियोपेताश्च तद्योगात्तुदमफलभावत । मूर्खा अपि हि भूयांसो विपश्चित्स्वामिनोऽनघा ॥१३८॥६८०॥

क्रियातिशययोमे च मुक्तिः केवलिनोऽपि हि । नान्यदा केवलित्वेऽपि तदसौ तन्निबन्धना ॥१३९॥६८१॥
फलं ज्ञानक्रियायोगे सर्वमेवोपपद्यते । तयोरपि च तद्भावः परमार्थेन नान्यथा ॥ १४० ॥
साध्यमर्थं परिज्ञाय यदि सम्यक् प्रवर्तते । ततस्तत्साधयत्येव तथा चाह बृहस्पतिः ॥ १४१ ॥
सम्यक्प्रवृत्तिः साध्यस्य प्राप्त्युपायोऽभिधीयते । तदप्राप्तावुपायत्वं न तस्या उपपद्यते ॥ १४२ ॥
असाध्यारम्भिणस्तेन सम्यग्ज्ञानं न जातुचित् । साध्यानारम्भिणश्चेति द्वयमन्योन्यसङ्गतम् ॥ १४३ ॥
अत एवागमज्ञस्य या क्रिया सा क्रियोच्यते । आगमज्ञोऽपि यस्तस्यां यथाशक्ति प्रवर्तते ॥ १४४ ॥
चिन्तामणिस्वरूपज्ञो दौर्गत्योपहतो न हि । तत्प्राप्त्युपायवैचित्र्ये मुक्त्वान्यत्र प्रवर्तते ॥ १४५ ॥
न चासौ तत्स्वरूपज्ञो योऽन्यत्रापि प्रवर्तते । मालतीगन्धगुणविद्भ्रमे न रमते ह्यलिः ॥ १४६ ॥
मुक्तिश्च केवलज्ञानक्रियातिशयजैव हि । तद्भाव एव तद्भावात्तदभावेऽप्यभावतः ॥ १४७ ॥
न विविक्तं द्वयं सम्यगेतदन्यैरपीष्यते । स्वकार्यसाधनाभावाद्यथाह व्यासमहर्षिः ॥ १४८ ॥
बठरश्च तपस्वी च शूरश्चाप्यकृतव्रणः । मद्यपा स्त्री सतीत्वं च राजन्न श्रद्दधाम्यहम् ॥१४९॥६९१॥

मृत्यादिवर्जिता चेह मुक्तिः कर्मपरिक्षयात् । नाकर्मणः कश्चिज्जन्म यथोक्तं पूर्वसूरिभिः ॥१५०॥६९२॥
दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः । कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः ॥ १५१ ॥
जन्माभावे जरामृत्योरभावो हेत्वभावतः । तदभावे च निःशेषदुःखाभावः सदैव हि ॥ १५२ ॥
परमानन्दभावश्च तदभावे हि शाश्वतः । व्याबाधाभावसंसिद्ध सिद्धानां सुखमिष्यते ॥ १५३ ॥
सर्वद्वन्द्वविनिर्मुक्ता सर्वबाधाविवर्जिता । सर्वसंसिद्धसत्कार्या सुखं तेषां किमुच्यते ॥ १५४ ॥
अमूर्त्ता सर्वभावज्ञास्त्रैलोक्योपरिवर्तिनः । क्षीणसङ्गा महात्मानस्ते सदा सुखमासते ॥ १५५ ॥
एतां वार्तामुपश्रुत्य भावयन् बुद्धिमान्नरः । इहोपन्यस्तशास्त्राणां भावार्थमधिगच्छति ॥ १५६ ॥
शतानि सप्त श्लोकानामनुष्टुप्छन्दसा कृतः । आचार्यहरिभद्रेण शास्त्रवार्तासमुच्चयः ॥ १५७ ॥
कृत्वा प्रकरणमेतद्यदवाप्तं किञ्चिदिह मया कुशलम् । भवविरहबीजमनघं लभतां भव्यो जनस्तेन ॥
य बुद्धा(द्ध)बोधयत शिखिजलमरुतस्तुष्टवुर्लोकमूर्त्ये, ज्ञानं यत्रोदपादि प्रतिहतभुवनालोकवच्छ्याप्त हेतो
सर्वप्राणिस्वभाषापरिणतिसुभगं कौशलं यस्य वाचा, तस्मिन्देवाधिदेवे भगवति भवताधीयतां भक्तिरागः

॥ इति श्रीहरिभद्राचार्यविरचितः शास्त्रवार्तासमुच्चयः ॥ [ ॥ ७०२ ॥

## ॥ अथ श्री षड्दर्शनसमुच्चयः ॥ ९ ॥

सद्दर्शनं जिनं नत्वा वीरं स्याद्वाददेशकम् । सर्वदर्शनवाच्योऽर्थः संक्षेपेण निगद्यते ॥ १ ॥
दर्शनानि षडेवात्र मूलभेदव्यपेक्षया । देवतातत्त्वभेदेन ज्ञातव्यानि मनीषिभिः ॥ २ ॥
बौद्धं नैयायिकं सांख्यं जैनं वैशेषिकं तथा । जैमिनीयं च नामानि दर्शनानाममून्यहो ॥ ३ ॥
१ तत्र बौद्धमते तावद्देवता सुगतः किल । चतुर्णामार्यसत्यानां दुःखादीनां प्ररूपकः ॥ ४ ॥
दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः । विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥ ५ ॥
समुदेति यतो लोके रागादीनां गणोऽखिलः । आत्मात्मीयस्वभावाख्यः समुदयः स सम्मतः ॥ ६ ॥
क्षणिकाः सर्वसंस्कारा इत्येवं वासना तु या । स मार्ग इति विज्ञेयो निरोधो मोक्ष उच्यते ॥ ७ ॥
पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् । धर्मायतनमेतानि द्वादशायतनानि च ॥ ८ ॥
प्रमाणे द्वे च विज्ञेये तथा सौगतदर्शने । प्रत्यक्षमनुमानं च सम्यग्ज्ञानं द्विधा यतः ॥ ९ ॥
प्रत्यक्षं कल्पनापोढमभ्रान्तं तत्र बुध्यताम् । त्रिरूपाल्लिङ्गतो लिङ्गिज्ञानं त्वनुमानसंज्ञितम् ॥ १० ॥

रूपाणि पक्षधर्मत्व सपक्षे विद्यमानता । विपक्षे नास्तिताहेतोरेव त्रीणि विभाव्यताम् ॥ ११ ॥
२ बौद्धराद्धान्तवाच्यस्य सक्षेपोय निवेदित । नैयायिकमतस्येत कथ्यमानो निशम्यताम् ॥१२॥
अक्षपादमते देव सृष्टिसहारकृच्छिव । विभुर्नित्यैकसर्वज्ञो नित्यबुद्धिसमाश्रय ॥ १३ ॥
तत्त्वानि षोडशाऽमुत्र प्रमाणादीनि तद्यथा । प्रमाण च प्रमेय च सशयश्च प्रयोजनम् ॥ १४ ॥
दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवास्तर्कनिर्णयौ । वादो जल्पो वितण्डा च हेत्वाभासाश्छलानि च ॥ १५ ॥
जातयो निग्रहस्थानान्येषामेव प्ररूपणा । अर्थोपलब्धिहेतु स्यात्प्रमाण तच्चतुर्विधम् ॥ १६ ॥
प्रत्यक्षमनुमान चोपमान शाब्दिक तथा । तत्रेन्द्रियार्थसम्पर्कोत्पन्नमव्यभिचारि च ॥ १७ ॥
व्यवसायात्मक ज्ञान व्यपदेशविवर्जितम् । प्रत्यक्षमनुमान तु तत्पूर्व त्रिविध भवेत ॥ १८ ॥ युग्मम् ॥
पूर्ववच्छेषवच्चैव दृष्ट सामान्यतस्तथा । तत्राद्य कारणात्कार्यानुमानमिह गीयते ॥ १९ ॥
रोलम्बगवलव्यालतमालमलिनत्विषः । वृष्टिं व्यभिचरन्तीह नैवम्प्रायाः पयोमुचः ॥ २० ॥
कार्यात्कारणानुमान यच्च तच्छेषवन्मतम् । तथाविधनदीपूरान्मेघो वृष्टो यथोपरि ॥ २१ ॥

यच्च सामान्यतो दृष्टं तदेवं गतिपूर्विका । पुंसि देशान्तरप्राप्तिर्यथा सूर्येऽपि सा तथा ॥ २२ ॥
प्रसिद्धवस्तुसाधर्म्यादप्रसिद्धस्य साधनम् । उपमानं समाख्यातं यथा गौर्गवयस्तथा ॥ २३ ॥
शाब्दमाप्तोपदेशस्तु मानमेवं चतुर्विधम् । प्रमेयं त्वात्मदेहाद्यं बुद्धीन्द्रियसुखादि च ॥ २४ ॥
किमेतदिति सन्दिग्धः प्रत्ययः संशयो मतः । प्रवर्तते यदर्थित्वात्तत्तु साध्यं प्रयोजनम् ॥ २५ ॥
दृष्टान्तस्तु भवेदेष विवादविषयो न यः । सिद्धान्तस्तु चतुर्भेदः सर्वतन्त्रादिभेदतः ॥ २६ ॥
प्रतिज्ञाहेतुदृष्टान्तोपनया निगमस्तथा । अवयवाः पञ्च तर्कः संशयोपरमे भवेत् ॥ २७ ॥
यथा काकादिसम्पातात् स्थाणुना भाव्यमत्र हि । ऊर्ध्वं सन्देहतर्काभ्यां प्रत्ययो निर्णयो मतः ॥ २८ ॥
आचार्यशिष्ययोः पक्षप्रतिपक्षपरिग्रहात् । या कथाभ्यासहेतुः स्यादसौ वाद उदाहृतः ॥ २९ ॥
विजिगीषुकथा या तु च्छलजात्यादिदूषणम् । स जल्पः सा वितण्डा तु या प्रतिपक्षवर्जिता ॥ ३० ॥
हेत्वाभासा असिद्धाद्याश्छलं कूपो नवोदकः । जातयो दूषणाभासाः पक्षादिर्दूष्यते न यैः ॥ ३१ ॥
निग्रहस्थानमाख्यातं परो येन निगृह्यते । प्रतिज्ञाहानिसन्न्यासविरोधादिविभेदतः ॥ ३२ ॥

नैयायिकमतस्यैव समास कथितोऽधुना । साङ्ख्याभिमतभावानामिदानीमयमुच्यते ॥ ३३ ॥
साङ्ख्या निरीश्वरा केचित् केचिदीश्वरदेवता । सर्वेषामपि तेषा स्याचत्त्वानां पञ्चविंशति ॥ ३४ ॥
सत्त्व रजस्तमश्चेति ज्ञेय तावद्गुणत्रयम् । प्रसादतापदैन्यादिकार्यलिङ्ग क्रमेण तत् ॥ ३५ ॥
एतेषां या समावस्था सा प्रकृति किलोच्यते । प्रधानाव्यक्तशब्दाभ्या वाच्या नित्यस्वरूपिका ॥ ३६ ॥
तत सञ्जायते बुद्धिर्महानिति यकोच्यते । अहङ्कारस्ततोऽपि स्याचस्मात् षोडशको गण ॥ ३७ ॥
स्पर्शन रसन घ्राण चक्षु श्रोत्र च पञ्चमम् । पञ्च बुद्धीन्द्रियाण्याहुस्तथा कर्मेन्द्रियाणि च ॥३८॥
पायूपस्थवच पाणिपादाख्यानि मनस्तथा । अन्यानि पञ्च रूपादितन्मात्राणीति षोडश ॥३९॥ युग्मम् ॥
रूपाचेजो रसादापो गन्धाद्भूमि स्वरान्नभ । स्पर्शाद्वायुस्तथैव च पञ्चभ्यो भूतपञ्चकम् ॥ ४० ॥

एव चतुर्विंशतितत्त्वरूप निवेदित साङ्ख्यमते प्रधानम् ।
अन्यस्त्वकर्ता विगुणस्तु भोक्ता तत्त्व पुमान्नित्यचिदभ्युपेत ॥ ४१ ॥

पञ्चविंशतितत्त्वानि साङ्ख्यस्यैव(व) भवन्ति च । प्रधाननरयोश्चात्र वृत्तिः पङ्ग्वन्धयोरिव ॥ ४२ ॥
प्रकृतिवियोगो मोक्ष पुरुषस्यैवान्तरज्ञानात् । मानत्रितय च भवेत् प्रत्यक्ष लैङ्गिक शाब्दम् ॥ ४३ ॥

एवं साङ्ख्यमतस्यापि समासः कथितोऽधुना । जैनदर्शनसङ्क्षेपः कथ्यते सुविचारवान् ॥ ४४ ॥

जिनेन्द्रो देवता तत्र रागद्वेषविवर्जितः । हतमोहमहामल्लः केवलज्ञानदर्शनः ॥ ४५ ॥

सुरासुरेन्द्रसम्पूज्यः सद्भूतार्थोपदेशकः । कृत्स्नकर्मक्षयं कृत्वा सम्प्राप्तः परमं पदम् ॥ ४६ ॥

जीवाजीवौ तथा पुण्यं पापमाश्रवसंवरौ । बन्धश्च निर्जरामोक्षौ नव तत्त्वानि तन्मते ॥ ४७ ॥

तत्र ज्ञानादिधर्मेभ्यो भिन्नाभिन्नो विवृत्तिमान् । शुभाशुभकर्मकर्त्ता भोक्ता कर्मफलस्य च ॥ ४८ ॥

चैतन्यलक्षणो जीवो यश्चैतद्विपरीतवान् । अजीवः स समाख्यातः पुण्यं सत्कर्मपुद्गलाः ॥ ४९ ॥

पापं तद्विपरीतं तु मिथ्यात्वाद्याश्च हेतवः । यस्तैर्बन्धः स विज्ञेय आश्रवो जिनशासने ॥ ५० ॥

संवरस्तन्निरोधस्तु बन्धो जीवस्य कर्मणः । अन्योन्यानुगमात् कर्मसम्बन्धो यो द्वयोरपि ॥ ५१ ॥

बद्धस्य कर्मणः शाटो यस्तु सा निर्जरा मता । आत्यन्तिको वियोगस्तु देहादेर्मोक्ष उच्यते ॥५२॥

एतानि तत्र(नव)तत्त्वानि यः श्रद्धत्ते स्थिराशयः । सम्यक्त्वज्ञानयोगेन तस्य चारित्रयोग्यता ॥५३॥

तथाभव्यत्वपाकेन यस्यैतत्त्रितयं भवेत् । सम्यग्ज्ञानक्रियायोगाज्जायते मोक्षभाजनम् ॥ ५४ ॥

प्रत्यक्ष च परोक्ष च द्वे प्रमाणे तथा मते । अनन्तधर्मक वस्तु प्रमाणविषयस्त्विह ॥ ५५ ॥
अपरोक्षतयार्थस्य ग्राहक ज्ञानमीदृशम । प्रत्यक्षमितरज्ज्ञेय परोक्ष ग्रहणेक्षया ॥ ५६ ॥
येनोत्पादव्ययध्रौव्ययुक्त यत्सत्तदिष्यते । अनन्तधर्मक वस्तु तेनोक्त मानगोचर ॥ ५७ ॥
जैनदर्शनसक्षेप इत्येष कथितोऽनघ । पूर्वापरविघातस्तु यत्र क्वापि न विद्यते ॥ ५८ ॥
देवताविषये भेदो नास्ति नैयायिके समम् । वैशेषिकाणा तत्त्वे तु विद्यतेऽसौ निदर्श्यते ॥ ५९ ॥
द्रव्य गुणस्तथा कर्म सामान्य च चतुर्थकम् । विशेषसमवायौ च तत्त्वषट्क हि तन्मते ॥ ६० ॥
तत्र द्रव्य नवधा भूजलतेजोऽनिलान्तरिक्षाणि । कालदिगात्ममनांसि च गुणः पुन पञ्चविंशतिधा ॥६१॥
स्पर्शरसरूपगन्धा शब्द सङ्ख्या विभागसयोगौ । परिमाण च पृथक्त्व तथा परत्वापरत्वे च ॥६२॥
बुद्धि सुखदु खेच्छा धर्माधर्मौ प्रयत्नसस्कारौ । द्वेष स्नेहगुरुत्वे द्रवत्ववेगौ गुणा एते ॥ ६३ ॥
उत्क्षेपावक्षेपावाकुञ्चनक प्रसारण गमनम् । पञ्चविध कर्मैतत्परापरे द्वे तु सामान्ये ॥ ६४ ॥
तत्र पर सत्ताख्य द्रव्यत्वाद्यपरमथ विशेषस्तु । निश्चयतो नित्यद्रव्यवृत्तिरन्त्यो विनिर्दिष्ट ॥ ६५ ॥

य इहायुतसिद्धानामाधाराधेयभूतभावानाम् । सम्बन्ध इह प्रत्ययहेतुः प्रोक्तः स समवायः ॥ ६६ ॥
प्रमाणं च द्विधाऽमीषां प्रत्यक्षं लैङ्गिकं तथा । वैशेषिकमतस्यैवं संक्षेपः परिकीर्तितः ॥ ६७ ॥
जैमिनीयाः पुनः प्राहुः सर्वज्ञादिविशेषणः । देवो न विद्यते कोऽपि यस्य मानं वचो भवेत् ॥ ६८ ॥
तस्मादतीन्द्रियार्थानां साक्षाद्द्रष्टुरभावतः । नित्येभ्यो वेदवाक्येभ्यो यथार्थत्वविनिश्चयः ॥ ६९ ॥
अत एव पुरा कार्यो वेदपाठः प्रयत्नतः । ततो धर्मस्य जिज्ञासा कर्तव्या धर्मसाधनी ॥ ७० ॥
नोदनालक्षणो धर्मो नोदना तु क्रियां प्रति । प्रवर्तकं वचः प्राहुः स्वःकामोऽग्निं यजेद्यथा ॥ ७१ ॥
प्रत्यक्षमनुमानं च शाब्दं चोपमया सह । अर्थापत्तिरभावश्च षट् प्रमाणानि जैमिनेः ॥ ७२ ॥
तत्र प्रत्यक्षमक्षाणां सम्प्रयोगे सतां सति । आत्मनो बुद्धिजन्मेत्यनुमानं लैङ्गिकं पुनः ॥ ७३ ॥
शाब्दं शाश्वतवेदोत्थमुपमानं प्रकीर्तितम् । प्रसिद्धार्थस्य साधर्म्यादप्रसिद्धस्य साधनम् ॥ ७४ ॥
दृष्टार्थानुपपत्त्या तु कस्याप्यर्थस्य कल्पना । क्रियते यद्बलेनासावर्थापत्तिरुदाहृता ॥ ७५ ॥
प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते । वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ ७६ ॥

जैमिनीयमतस्यापि सङ्क्षेपोऽयं निवेदित । एवमास्तिकवादानां कृत सङ्क्षेपकीर्तनम् ॥ ७७ ॥
नैयायिकमतादन्ये भेद वैशेषिकैः सह । न मन्यन्ते मते तेषां पञ्चैवास्तिकवादिन ॥ ७८ ॥
षड्दर्शनसङ्ख्या तु पूर्यते तन्मते किल । लोकायतमतक्षेपात् कथ्यते तेन तन्मतम् ॥ ७९ ॥
लोकायता वदन्त्येव नास्ति दे(जी)वो न निर्वृतिः। धर्माधर्मौ न विद्येते न फल पुण्यपापयो ॥ ८० ॥
एतावानेव लोकोऽयं यावानिन्द्रियगोचर । भद्रे वृकपद पश्य यद्वदन्ति बहुश्रुता ॥ ८१ ॥
पिब खाद च जातशोभने यदतीत वरगात्रि तन्न ते। न हि भीरु गत निवर्तते समुदयमात्रमिद कलेवरम् ॥
किञ्च पृथ्वी जल तेजो वायुर्भूतचतुष्टयम् । चैतन्यभूमिरेतेषा मान त्वक्षजमेव हि ॥ ८३ ॥
पृथ्व्यादिभूतसहत्या तथादेहादिसम्भव । मदशक्ति सुराङ्गेभ्यो यद्वत्तद्वात्स्थितात्मता ॥ ८४ ॥
तस्माद्दृष्टपरित्यागाद्यददृष्टे प्रवर्तनम् । लोकस्य तद्विमूढत्व चार्वाका प्रतिपेदिरे ॥ ८५ ॥
साध्यावृत्तिनिवृत्तिभ्यां या प्रीतिर्जायते जने। निरर्था सा मते तेषां सा चाकाशा(धर्म कामा)त्परा न हि
लोकायतमतेऽप्येव सङ्क्षेपोऽयं निवेदित । अभिधेयतात्पर्यार्थ पर्यालोच्य सुबुद्धिभिः ॥ ८७ ॥

॥ श्रीहरिभद्रसूरिकृतः षड्दर्शनसमुच्चयः समाप्त ॥

१ यस्य सङ्क्लेशजननो, रागो नास्त्येव सर्वथा । न च द्वेषोऽपि सत्त्वेषु, शमेन्धनदवानलः ॥ १ ॥
न च मोहोऽपि सज्ज्ञान–च्छादनोऽशुद्धवृत्तकृत् । त्रिलोकख्यातमहिमा, महादेवः स उच्यते ॥२॥ युग्मम्
यो वीतरागः सर्वज्ञो, यः शाश्वतसुखेश्वरः । क्लिष्टकर्मकलातीतः, सर्वथा निष्कलस्तथा ॥ ३ ॥
यः पूज्यः सर्वदेवानां, यो ध्येयः सर्वयोगिनाम् । यः स्रष्टा सर्वनीतीनां, महादेवः स उच्यते ॥४॥ युग्मम्
एवं सद्वृत्तयुक्तेन, येन शास्त्रमुदाहृतम् । शिववर्त्म परं ज्योति–स्त्रिकोटीदोषवर्जितम् ॥ ५ ॥
यस्य चाराधनोपायः, सदाज्ञाभ्यास एव हि । यथाशक्ति विधानेन, नियमात्स फलप्रदः ॥ ६ ॥
सुवैद्यवचनाद्यद्वद्, व्याधेर्भवति सङ्क्षयः । तद्वदेव हि तद्वाक्याद्, ध्रुवः संसारसङ्क्षयः ॥ ७ ॥
एवम्भूताय शान्ताय, कृतकृत्याय धीमते । महादेवाय सततं, सम्यग्भक्त्या नमो नमः ॥ ८ ॥
२ द्रव्यतो भावतश्चैव, द्विधा स्नानमुदाहृतम् । बाह्यमाध्यात्मिकं चेति, तदन्यैः परिकीर्त्यते ॥१॥
जलेन देहदेशस्य, क्षणं यच्छुद्धिकारणम् । प्रायोऽन्यानुपरोधेन, द्रव्यस्नानं तदुच्यते ॥ २ ॥१०॥

गृस्थेद् यो विधानेन, देवतातिथिपूजनम् । करोति मलिनारम्भी, तस्यैतदपि शोभनम् ॥ ३ ॥११॥
भावशुद्धिनिमित्तत्वात्, तथानुभवसिद्धित । कथञ्चिद्दोषभावेऽपि, तदन्यगुणभावत ॥ ४ ॥
अधिकारिवशाच्छास्त्रे, धर्मसाधनसंस्थिति । व्याधिप्रतिक्रियातुल्या, विज्ञेया गुणदोषयो ॥ ५ ॥
ध्यानाम्भसा तु जीवस्य, सदा यच्छुद्धिकारणम् । मल कर्म समाश्रित्य, भावस्नान तदुच्यते ॥ ६ ॥
ऋषीणामुत्तम ह्येतन्–निर्दिष्ट परमर्षिभि । हिंसादोषनिवृत्ताना, व्रतशीलविवर्धनम् ॥ ७ ॥
स्नात्वाऽनेन यथायोग, नि शेषमलवर्जित । भूयो न लिप्यते तेन, स्नातक परमार्थत ॥ ८ ॥
३ अष्टपुष्पी समाख्याता, स्वर्गमोक्षप्रसाधनी । अशुद्धेतरभेदेन, द्विधा तत्त्वार्थदर्शिभि ॥ १ ॥
शुद्धागमैर्यथालाभ, प्रत्यग्रै शुचिभाजनै । स्तोकैर्वा बहुभिर्वापि, पुष्पैर्जात्यादिसम्भवै ॥ २ ॥
अष्टापायविनिर्मुक्त–तदुत्थगुणभूतये । दीयते देवदेवाय, या सा शुद्धेत्युदाहृता ॥ ३ ॥
सङ्कीर्णेषा स्वरूपेण, द्रव्याद् भावप्रसक्तित । पुण्यबन्धनिमित्तत्वाद्, विज्ञेया स्वर्गसाधनी ॥ ४ ॥
या पुनर्भावजै पुष्पै, शास्त्रोक्तिगुणसङ्गतैः । परिपूर्णत्वतोऽम्लानै–रत एव सुगन्धिभि ॥५॥२१॥

अहिंसासत्यमस्तेयं, ब्रह्मचर्यमसङ्गता । गुरुभक्तिस्तपो ज्ञानं, सत्पुष्पाणि प्रचक्षते ॥ ६ ॥ २२ ॥

एभिर्देवाधिदेवाय, बहुमानपुरस्सरा । दीयते पालनाद्या तु, सा वै शुद्धेत्युदाहृता ॥ ७ ॥

प्रशस्तो ह्यनया भाव–स्ततः कर्मक्षयो ध्रुवः । कर्मक्षयाच्च निर्वाण–मत एषा सतां मता ॥ ८ ॥

४ कर्मेन्धनं समाश्रित्य, दृढा सद्भावनाहुतिः । धर्मध्यानाग्निना कार्या, दीक्षितेनाग्निकारिका १

दीक्षा मोक्षार्थमाख्याता, ज्ञानध्यानफलं स च । शास्त्र उक्तो यतः सूत्रं, शिवधर्मोत्तरे ह्यदः ॥ २ ॥

पूजया विपुलं राज्य–मग्निकार्येण सम्पदः । तपः पापविशुद्ध्यर्थं, ज्ञानं ध्यानं च मुक्तिदम् ॥ ३ ॥

पापं च राज्यसम्पत्सु, सम्भवत्यनघं ततः । न तद्धेत्वोरुपादान-मिति सम्यग् विचिन्त्यताम् ॥ ४ ॥

विशुद्धिश्चास्य तपसा, न तु दानादिनैव यत् । तदियं नान्यथा युक्ता, तथा चोक्तं महात्मना ॥ ५ ॥

धर्मार्थं यस्य वित्तेहा, तस्यानीहा गरीयसी । प्रक्षालनाद्धि पङ्कस्य, दूरादस्पर्शनं वरम् ॥ ६ ॥

मोक्षाध्वसेवया चैताः, प्रायः शुभतरा भुवि । जायन्ते ह्यनपायिन्य, इयं सच्छास्त्रसंस्थितिः ॥ ७ ॥

ईष्टापूर्तं न मोक्षाङ्गं, सकामस्योपवर्णितम् । अकामस्य पुनर्योक्ता, सैव न्याय्याग्निकारिका ॥८॥३२॥

५ सर्वसम्पत्करी चैका, पौरुषघ्नी तथा परा। वृत्तिभिक्षा च तत्त्वज्ञै–रिति भिक्षा त्रिधोदिता ॥१॥ २२॥
यतिर्ध्यानादियुक्तो यो, गुर्वाज्ञायां व्यवस्थित । सदाऽनारम्भिणस्तस्य, सर्वसम्पत्करी मता ॥ २ ॥
वृद्धाद्यर्थमसङ्गस्य, भ्रमरोपमयाऽटत । गृहिदेहोपकाराय–विहितेति शुभाशयात् ॥ ३ ॥
प्रव्रज्या प्रतिपन्नो य–स्तद्विरोधेन वर्तते । असदारम्भिणस्तस्य, पौरुषघ्नीति कीर्तिता ॥ ४ ॥
धर्मलाघवकृन्मूढो, भिक्षयोदरपूरणम् । करोति दैन्यात्पीनाङ्ग , पौरुष हन्ति केवलम् ॥ ५ ॥
नि स्वान्धपङ्गवो ये तु, न शक्ता वै क्रियान्तरे । भिक्षामटन्ति वृत्त्यर्थं, वृत्तिभिक्षेयमुच्यते ॥ ६ ॥
नातिदुष्टापि चामीषा–मेषा स्यान्न समी तथा । अनुकम्पानिमित्तत्वाद्, धर्मलाघवकारिण ॥ ७ ॥
दातृणामपि चैताभ्य, फल क्षेत्रानुसारतः । विज्ञेयमाशयाच्चापि, स विशुद्ध फलप्रदः ॥ ८ ॥
६ अकृतोऽकारितश्चान्यै–रसङ्कल्पित एव च । यते पिण्डः समाख्यातो विशुद्ध शुद्धिकारक ॥१॥
यो न सङ्कल्पित पूर्वं, देयबुद्ध्या कथं नु तम् । ददाति कश्चिदेवञ्च, स विशुद्धो वृथोदितम् ॥ २ ॥
न चैव सद्गृहस्थानां, भिक्षा प्रायो गृहेषु यत् । स्वपरार्थं तु ते यत्न, कुर्वते नान्यथा क्वचित् ॥३॥४२॥

सङ्कल्पनं विशेषेण, यत्रासौ दुष्ट इत्यपि । परिहारो न सम्यक् स्याद्, यावदर्थिकवादिनः ॥४॥४४॥
विषयो वाऽस्य वक्तव्यः, पुण्यार्थप्रकृतस्य च । असम्भवाभिधानात्स्या–दासस्यानासताऽन्यथा ॥ ५ ॥
विभिन्नं देयमाश्रित्य, स्वभोग्याद्यत्र वस्तुनि । सङ्कल्पनं क्रियाकाले, तद्दुष्टं विषयोऽनयोः ॥ ६ ॥
स्वोचिते तु यदारम्भे, तथा सङ्कल्पनं कचित् । न दुष्टं शुभभावत्वात्, तच्छुद्धाऽपरयोगवत् ॥ ७ ॥
दृष्टोऽसङ्कल्पितस्यापि, लाभ एवमसम्भवः । नोक्त इत्यासतासिद्धि–र्यतिधर्मोऽतिदुष्करः ॥ ८ ॥

७ सर्वारम्भनिवृत्तस्य, मुमुक्षोर्भावितात्मनः । पुण्यादिपरिहाराय, मतं प्रच्छन्नभोजनम् ॥ १ ॥
भुञ्जानं वीक्ष्य दीनादि–र्याचते क्षुत्प्रपीडितः । तस्यानुकम्पया दाने, पुण्यबन्धः प्रकीर्तितः ॥ २ ॥
भवहेतुत्वतश्चायं, नेष्यते मुक्तिवादिनाम् । पुण्यापुण्यक्षयान्मुक्ति–रितिशास्त्रव्यवस्थितेः ॥ ३ ॥
प्रायो न चानुकम्पावां–स्तस्यादत्वा कदाचन । तथाविधस्वभावत्वा–च्छक्नोति सुखमासितुम् ॥ ४ ॥
अदानेऽपि च दीनादे–रप्रीतिर्जायते ध्रुवम् । ततोऽपि शासनद्वेष–स्ततः कुगतिसन्ततिः ॥ ५ ॥
निमित्तभावतस्तस्य, सत्युपाये प्रमादतः । शास्त्रार्थबाधनेनेह, पापबन्ध उदाहृतः ॥ ६ ॥ ५४ ॥

शास्त्रार्थश्च प्रयत्नेन, यथाशक्ति मुमुक्षुणा । अन्यव्यापारशून्येन, कर्त्तव्य सर्वदैव हि ॥७॥५५॥
एष सुमयथाऽप्येत—द्दुष्ट प्रकटभोजनम् । यस्मान्निदर्शित शास्त्रे, ततस्त्यागोऽस्य युक्तिमान् ॥ ८ ॥

८ द्रव्यतो भावतश्चैव, प्रत्याख्यान द्विधा मतम् । अपेक्षादिकृत ह्याद्य—मतोऽन्यच्चरम मतम् ॥ १ ॥
अपेक्षा चाविधिश्चैवा—परिणामस्तथैव च । प्रत्याख्यानस्य विघ्नास्तु, वीर्याभावस्तथाऽपर ॥ २ ॥
लब्ध्याद्यपेक्षयाह्येत—द्भव्यानामपि कश्चित् । श्रूयते न च तत्किञ्चि—दित्यपेक्षाऽत्र निन्दिता ॥ ३ ॥
यथैवाऽविधिना लोके, न विद्याग्रहणादि यत् । विपर्ययफलत्वेन, तथेदमपि भाव्यताम् ॥ ४ ॥
अक्षयोपशमात्त्याग—परिणामे तथाऽसति । जिनाज्ञाभक्तिसवेग—वैकल्यादेतदप्यसत् ॥ ५ ॥
उद्यवीर्यविरहात्, क्लिष्टकर्मोदयेन यत् । बाध्यते तदपि द्रव्य—प्रत्याख्यान प्रकीर्तितम् ॥ ६ ॥
एतद्विपर्ययाद्भाव—प्रत्याख्यान जिनोदितम् । सम्यक्चारित्ररूपत्वान्—नियमान्मुक्तिसाधनम् ॥ ७ ॥
जिनोक्तमितिसच्छ्रद्धया, ग्रहणे द्रव्यतोऽप्यद । बाध्यमान भवेद्भाव—प्रत्याख्यानस्य कारणम् ॥ ८ ॥

९ विषयप्रतिभास चा—त्मपरिणतिमत्तथा । तत्त्वसवेदन चैव, ज्ञानमाहुर्महर्षय ॥१॥६५॥

विषकण्टकरत्नादौ, बालादिप्रतिभासवत् । विषयप्रतिभासं स्यात्, तद्धेयत्वाद्यवेदकम् ॥२॥६६॥
निरपेक्षप्रवृत्त्यादिलिङ्गमेतदुदाहृतम् । अज्ञानावरणापायं, महापायनिबन्धनम् ॥ ३ ॥
पातादिपरतन्त्रस्य, तद्दोषादावसंशयम् । अनर्थाद्याप्तियुक्तं चा-त्मपरिणातिमन्मतम् ॥ ४ ॥
तथाविधप्रवृत्त्यादि-व्यङ्ग्यं सदनुबन्धि च । ज्ञानावरणह्रासोत्थं, प्रायो वैराग्यकारणम् ॥ ५ ॥
स्वस्थवृत्तेः प्रशान्तस्य, तद्धेयत्वादिनिश्चयम् । तत्त्वसंवेदनं सम्यग्-यथाशक्ति फलप्रदम् ॥ ६ ॥
न्याय्यादौ शुद्धवृत्त्यादि-गम्यमेतत्प्रकीर्तितम् । सज्ज्ञानावरणापायं, महोदयानिबन्धनम् ॥ ७ ॥
एतस्मिन्सततं यत्नः, कुग्रहत्यागतो भृशम् । मार्गश्रद्धादिभावेन, कार्य आगमतत्परैः ॥ ८ ॥

१० आर्त्तध्यानाख्यमेकं स्या-न्मोहगर्भं तथापरम् । सज्ज्ञानसङ्गतं चेति, वैराग्यं त्रिविधं स्मृतम् ।१।
इष्टेतरवियोगादि-निमित्तं प्रायशो हि यत् । यथाशक्त्यपि हेयादा-वप्रवृत्त्यादिवर्जितम् ॥ २ ॥
उद्वेगकृद्विषादाढ्य-मात्मघातादिकारणम् । आर्त्तध्यानं ह्यदो मुख्यं, वैराग्यं लोकतो मतम् ॥ ३ ॥
एको नित्यस्तथाऽबद्धः, क्षय्यसन्वेह सर्वथा । आत्मेतिनिश्चयाद् भूयो, भवनैर्गुण्यदर्शनात् ॥४॥७६॥

तत्त्यागायोपशान्तस्य, सद्वृत्तस्यापि भावतः। वैराग्य तद्गत यचन्–मोहगर्भमुदाहृतम् ॥५॥७७॥
भूयांसो नामिनो बद्धा, बाह्येनेच्छादिना समी। आत्मानस्तद्वशात्कष्ट, भवे तिष्ठन्ति दारुणे ॥ ६ ॥
एव विज्ञाय तत्त्याग–विधिस्त्यागश्च सर्वथा। वैराग्यमाहु सज्ज्ञान–सङ्गत तत्त्वदर्शिन ॥ ७ ॥
एतत्तत्त्वपरिज्ञाना–न्नियमेनोपजायते। यतोऽत्र साधन सिद्धे–रेतदेवोदित जिनै ॥ ८ ॥
११ दु·खात्मक तप केचि–न्मन्यन्ते तन्न युक्तिमत्। कर्मोदयस्वरूपत्वाद्–बलीवर्दादिदु खवत् । १ ।
सर्व एव च दु·ख्येव, तपस्वी सम्प्रसज्यते। विशिष्टस्तद्विशेषेण, सुधनेन धनी यथा ॥ २ ॥
महातपस्विनश्चैव, त्वन्नीत्या नारकादय । शमसौख्यप्रधानत्वा–द्योगिनस्त्वतपस्विन ॥ ३ ॥
युक्त्यागमबहिर्भूत–मतस्त्याज्यमिद बुधै । अशास्तध्यानजननात्, प्राय आत्मापकारकम् ॥ ४ ॥
मनइन्द्रिययोगाना–महानिश्चोदिता जिनै । यतोऽत्र तत्कथ त्वस्य, युक्ता स्याद् दु·खरूपता ॥ ५ ॥
यापि चानशनादिभ्य , कायपीडा मनाक् क्वचित्। व्याधिक्रियासमा सापि, नेष्टसिद्ध्यात्र बाधनी ॥६॥
दृष्टा चेष्टार्थसंसिद्धौ, कायपीडा ह्यदु खदा। रत्नादिवणिगादीना, तद्वदत्रापि भाव्यताम् ॥७॥८७॥

विशिष्टज्ञानसंवेग—शमसारमतस्तपः । क्षायोपशामिकं ज्ञेय—मव्याबाधसुखात्मकम् ॥ ८ ॥ ८८ ॥

१२ शुष्कवादो विवादश्च, धर्मवादस्तथापरः । इत्येष त्रिविधो वादः, कीर्तितः परमर्षिभिः ॥ १ ॥

अत्यन्तमानिना सार्धं, क्रूरचित्तेन च दृढम् । धर्मद्विष्टेन मूढेन, शुष्कवादस्तपस्विनः ॥ २ ॥

विजयेऽस्यातिपातादि, लाघवं तत्पराजयात् । धर्मस्येति द्विधाप्येष, तत्त्वतोऽनर्थवर्धनः ॥ ३ ॥

लब्धिख्यात्यर्थिना तु स्याद्, दुःस्थितेनाऽमहात्मना । छलजातिप्रधानो यः, स विवाद इति स्मृतः ४

विजयो ह्यत्र सन्नीत्या, दुर्लभस्तत्त्ववादिनः । तद्भावेऽप्यन्तरायादि-दोषोऽदृष्टविघातकृत् ॥ ५ ॥

परलोकप्रधानेन, मध्यस्थेन तु धीमता । स्वशास्त्रज्ञाततत्त्वेन, धर्मवाद उदाहृतः ॥ ६ ॥

विजयेऽस्य फलं धर्म--प्रतिपत्त्याद्यनिन्दितम् । आत्मनो मोहनाशश्च, नियमात्तत्पराजयात् ॥ ७ ॥

देशाद्यपेक्षया चेह, विज्ञाय गुरुलाघवम् । तीर्थकृज्ज्ञातमालोच्य, वादः कार्यो विपश्चिता ॥ ८ ॥

१३ विषयो धर्मवादस्य, तत्तत्तन्त्रव्यपेक्षया । प्रस्तुतार्थोपयोग्येव, धर्मसाधनलक्षणः ॥ १ ॥

पञ्चैतानि पवित्राणि, सर्वेषां धर्मचारिणाम् । अहिंसा सत्यमस्तेयं, त्यागो मैथुनवर्जनम् ॥ २ ॥ ९८ ॥

क खल्वेतानि युज्यन्ते, मुख्यवृत्त्या क वा नहि। तन्त्रे तत्तन्त्रनीत्यैव, विचार्यं तत्त्वतो ह्यद ॥३॥९९॥
धर्मार्थिभि प्रमाणादे–र्लक्षण न तु युक्तिमत्। प्रयोजनाद्यभावेन, तथा चाह महामति ॥ ४ ॥
प्रसिद्धानि प्रमाणानि, व्यवहारश्च तत्कृत । प्रमाणलक्षणस्योक्तौ ज्ञायते न प्रयोजनम् ॥ ५ ॥
प्रमाणेन विनिश्चित्य, तदुच्येत न वा ननु। अलक्षितात्कथ युक्ता, नान्यतोऽस्य विनिश्चिति ॥ ६ ॥
सत्यां चास्यां तदुक्त्या किं, तद्वद्विषयनिश्चितेः। तत एवाविनिश्चित्य, तस्योक्तिर्व्यान्ध्यमेव हि॥ ७ ॥
तस्माद्यथोदित वस्तु, विचार्यं रागवर्जितै । धर्मार्थिभिः प्रयत्नेन, तत इष्टार्थसिद्धित ॥ ८ ॥

१४ तत्रात्मा नित्य एवेति, येषामेकान्तदर्शनम्। हिंसादय कथ तेषां, युज्यन्ते मुख्यवृत्तित ॥ १ ॥
निष्क्रियोऽसौ ततो हन्ति, हन्यते वा न जातुचित्। किञ्चित्केनचिदित्येव, न हिंसास्योपपद्यते॥ २ ॥
अभावे सर्वथैतस्या, अहिंसापि न तत्त्वत । सत्यादीन्यपि सर्वाणि, नाहिंसासाधनत्वत ॥ ३ ॥
तत सन्नीतितोऽभावा–दमीषामसदेव हि । सर्वं यस्मादनुष्ठान, मोक्षसङ्गतमेव च ॥ ४ ॥
शरीरेणापि सम्बन्धो, नात एवास्य सङ्गत । तथा सर्वगतत्वाच्च, ससारश्चाप्यकल्पित ॥ ५ ॥१०१॥

ततश्चोर्ध्वगतिर्धर्मा–दधोगतिरधर्मतः। ज्ञानान्मोक्षश्च वचनं, सर्वमेवौपचारिकम् ॥ ६ ॥ ११० ॥
भोगाधिष्ठानविषये–ऽप्यस्मिन् दोषोऽयमेव तु। तद्भेदादेव भोगोऽपि, निष्क्रियस्य कुतो भवेत् ॥ ७ ॥
इष्यते चेत् क्रियाऽप्यस्य, सर्वमेवोपपद्यते। मुख्यवृत्त्याऽनघं किन्तु, परासिद्धान्तसंश्रयः ॥ ८ ॥

१५ क्षणिकज्ञानसन्तान–रूपेऽप्यात्मन्यसंशयम्। हिंसादयो न तत्त्वेन, स्वसिद्धान्तविरोधतः॥१॥
नाशहेतोरयोगेन, क्षणिकत्वस्य संस्थितिः। नाशस्य चान्यतोऽभावे, भवेद्धिंसाप्यहेतुका ॥ २ ॥
ततश्चास्याः सदा सत्ता, कदाचिन्नैव वा भवेत्। कादाचित्कं हि भवनं, कारणोपनिबन्धनम् ॥ ३ ॥
न च सन्तानभेदस्य, जनको हिंसको भवेत्। सांवृतत्वान्न जन्यत्वं, यस्मादस्योपपद्यते ॥ ४ ॥
न च क्षणविशेषस्य, तेनैव व्यभिचारतः। तथा च सोप्युपादान–भावेन जनको मतः ॥ ५ ॥
तस्यापि हिंसकत्वेन, न कश्चित्स्यादहिंसकः। जनकत्वाविशेषेण, नैवं तद्विरतिः क्वचित् ॥ ६ ॥
उपन्यासश्च शास्त्रेऽस्याः, कृतो यत्नेन चिन्त्यताम्। विषयोऽस्य यमासाद्य, हन्तैष सफलो भवेत् ॥ ७॥
अभावेऽस्या न युज्यन्ते सत्यादीन्यपि तत्त्वतः। अस्याः संरक्षणार्थं तु, यदेतानि मुनिर्जगौ॥८॥१२०॥

१६नित्यानित्ये तथा देहाद्,भिन्नाभिन्ने च तत्त्वतः।घटन्ते आत्मनि न्यायाद्,हिंसादीन्यविरोधतः॥१॥१२१
पीडाकर्तृत्वयोगेन, देहव्यापत्त्यपेक्षया । तथा हन्मीति सङ्क्लेशा—द्धिंसैषा सनिबन्धना ॥ २ ॥
हिंस्यकर्मविपाकेऽपि, निमित्तत्वनियोगतः । हिंसकस्य भवेदेषा, दुष्टा दुष्टानुबन्धतः ॥ ३ ॥
ततः सदुपदेशादेः, क्लिष्टकर्मवियोगतः । शुभभावानुबन्धेन, हन्तास्या विरतिर्भवेत् ॥ ४ ॥
अहिंसैषा मता मुख्या, स्वर्गमोक्षप्रसाधनी । एतत्संरक्षणार्थं च, न्याय्यं सत्यादिपालनम् ॥ ५ ॥
स्मरणप्रत्यभिज्ञान—देहसंस्पर्शवेदनात् । अस्य नित्यादिसिद्धिश्च, तथालोकप्रसिद्धितः ॥ ६ ॥
देहमात्रे च सत्यस्मिन्, स्यात्सङ्कोचादिधर्मिणि । धर्मादेरूर्ध्वगत्यादि, यथार्थं सर्वमेव तु ॥ ७ ॥
विचार्यमेतत् सद्बुद्धया, मध्यस्थेनान्तरात्मना । प्रतिपत्तव्यमेवेति, न खल्वन्यः सतां नयः ॥ ८ ॥
१७ भक्षणीयं सता मांसं, प्राण्यङ्गत्वेन हेतुना । ओदनादिवदित्येवं, कश्चिदाहातितार्किकः ॥ १ ॥
भक्ष्याभक्ष्यव्यवस्थेह, शास्त्रलोकनिबन्धना । सर्वैव भावतो यस्मा—त्तस्मादेतदसाम्प्रतम् ॥ २ ॥
तत्र प्राण्यङ्गमप्येकं, भक्ष्यमन्यत्तु नो तथा।सिद्धं गवादिसत्क्षीर—रुधिरादौ तथेक्षणात्॥३॥१२१॥

॥४॥१३२॥

प्राण्यङ्गत्वेन न च नो-ऽभक्षणीयमिदं मतम्। किन्त्वन्यजीवभावेन, तथाशास्त्रप्रसिद्धितः ॥४॥१३२॥
भिक्षुमांसनिषेधोऽपि, न चैवं युज्यते क्वचित्। अस्थ्याद्यपि च भक्ष्यं स्या-त्प्राण्यङ्गत्वाविशेषतः ॥५॥
एतावन्मात्रसाम्येन, प्रवृत्तिर्यदि चेष्यते। जायायां स्वजनन्यां च, स्त्रीत्वात्तुल्यैव साऽस्तु ते ॥६॥
तस्माच्छास्त्रं च लोकं च, समाश्रित्य वदेद् बुधः। सर्वत्रैवं बुधत्वं स्या-दन्यथोन्मत्ततुल्यता॥ ७ ॥
शास्त्रे चास्तेन वोऽप्येत-न्निषिद्धं यत्नतो ननु। लङ्कावतारसूत्रादौ ततोऽनेन न किञ्चन ॥ ८ ॥
१८ अन्योऽविमृश्य शब्दार्थं, न्याय्यं स्वयमुदीरितम्। पूर्वापरविरुद्धार्थ-मेवमाहात्र वस्तुनि ॥१॥
न मांसभक्षणे दोषो, न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥ २ ॥
मां स भक्षयिताऽमुत्र, यस्य मांसमिहाद्म्यहम्। एतन्मांसस्य मांसत्वं, प्रवदन्ति मनीषिणः ॥३॥
इत्थं जन्मैव दोषोऽत्र, न शास्त्राद्बाह्यभक्षणम्। प्रतीत्यैष निषेधश्च, न्याय्यो वाक्यान्तराद् गतेः ॥४॥
प्रोक्षितं भक्षयेन्मांसं, ब्राह्मणानां च काम्यया। यथाविधि नियुक्तस्तु, प्राणानामेव वाऽत्यये ॥५॥
अत्रैवासावदोषश्चे-न्निवृत्तिर्नास्य सज्यते। अन्यदाऽभक्षणादत्रा-भक्षणे दोषकीर्तनात् ॥६॥१४२॥

यथाविधि नियुक्तस्तु, यो मांस नात्ति वै द्विज । स प्रेत्य पशुतां याति, सम्भवानेकविंशतिम् ॥७॥१४३॥
पारिव्राज्य निवृत्तिश्चे—यस्तदप्रतिपत्तित । फलाभाव' स एवास्य, दोषो निर्दोषतैव न ॥ ८ ॥

१९ मद्य पुनः प्रमादाङ्ग, तथा सच्चित्तनाशनम् । सन्धानदोषवच्चत्र, न दोष इति साहसम् ॥१॥
किं वेह बहुनोक्तेन, प्रत्यक्षेणेव दृश्यते । दोषोऽस्य वर्तमानेऽपि, तथाभण्डनलक्षणः ॥ २ ॥
श्रूयते च ऋषिर्मद्यात्, प्राप्तज्योतिर्महातपा । स्वर्गाङ्गनाभिराक्षिप्तो, मूर्खवन्निधन गतः ॥ ३ ॥
कश्चिदृषिस्तपस्तेपे, भीत इन्द्र सुरस्त्रियः । क्षोभाय प्रेषयामास, तस्यागत्य च तास्तकम् ॥ ४ ॥
विनयेन समाराध्य, वरदाभिमुख स्थितम् । जगुर्मद्य तथा हिंसां, सेवस्वाब्रह्म वेच्छया ॥ ५ ॥
स एव गदितस्ताभि—र्द्वयोर्नरकहेतुताम् । आलोच्य मद्यरूप च, शुद्धकारणपूर्वकम् ॥ ६ ॥
मद्य प्रपद्य तद्भोगा—न्नष्टधर्मस्थितिर्मदात् । विदशार्थमज हत्वा, सर्वमेव चकार सः ॥ ७ ॥
ततश्च भ्रष्टसामर्थ्य, स मृत्वा दुर्गतिं गत' । इत्थ दोषाकरो मद्य, विज्ञेय धर्मचारिभि ॥ ८ ॥

२० रागादेव नियोगेन, मैथुन जायते यतः । ततः कथं न दोषोऽत्र, येन शास्त्रे निषिध्यते ॥१॥१५३॥

धर्मार्थं पुत्रकामस्य, स्वदारेष्वधिकारिणः । ऋतुकाले विधानेन, यत्स्याद्दोषो न तत्र चेत् ॥२॥१५४॥

नापवादिककल्पत्वा–न्नैकान्तेनेत्यसङ्गतम् । वेदं ह्यधीत्य स्नायाद्य–दधीत्यैवेति शासितम् ॥ ३ ॥

स्नायादेवेति न तु य-त्ततो हीनो गृहाश्रमः । तत्र चैतदतो न्याया–त्प्रशंसास्य न युज्यते ॥ ४ ॥

अदोषकीर्तनादेव, प्रशंसा चेत् कथं भवेत् । अर्थापत्त्या सदोषस्य, दोषाभावप्रकीर्तनात् ॥ ५ ॥

तत्र प्रवृत्तिहेतुत्वा–त्त्याज्यबुद्धेरसम्भवात् । विध्युक्तेरिष्टसंसिद्धे–रुक्तिरेषा न भद्रिका ॥ ६ ॥

प्राणिनां बाधकं चैत–च्छास्त्रे गीतं महर्षिभिः नलिकातप्तकणक–प्रवेशज्ञाततस्तथा ॥ ७ ॥

मूलं चैतदधर्मस्य, भवभावप्रवर्धनम् । तस्माद्विषान्नवत्त्याज्य–मिदं मृत्युमनिच्छता ॥ ८ ॥

२१ सूक्ष्मबुद्ध्या सदा ज्ञेयो धर्मो धर्मार्थिभिर्नरैः । अन्यथा धर्मबुद्ध्यैव, तद्विघातः प्रसज्यते ॥ १ ॥

गृहीत्वा ग्लानभैषज्य–प्रदानाभिग्रहं यथा । तदप्राप्तौ तदन्तेऽस्य, शोकं समुपगच्छतः ॥ २ ॥

गृहीतोऽभिग्रहः श्रेष्ठो, ग्लानो जातो न च क्वचित् । अहो मेऽधन्यता कष्टं, न सिद्धमभिवाञ्छितम् ॥३॥

एवं ह्येतत्समादानं, ग्लानभावाभिसन्धिमत् । साधूनां तत्त्वतो यत्तद्, दुष्टं ज्ञेयं महात्मभिः ॥४॥१६४॥

लौकिकैरपि चैषोऽर्थो, दृष्ट सूक्ष्मार्थदर्शिभि । प्रकारान्तरत कैश्चि—दत एतदुदाहृतम् ॥५॥१६५॥
अङ्गेष्वेव जरा यातु, यत्त्वयोपकृत मम । नर प्रत्युपकाराय, विपत्सु लभते फलम् ॥ ६ ॥
एन निरुद्धदानादौ, हीनोत्तमगते सदा । प्रव्रज्यादिविधाने च, शास्त्रोक्तन्यायबाधिते ॥ ७ ॥
द्रव्यादिभेदतो ज्ञेयो, धर्मव्याघात एव हि । सम्यग्माध्यस्थ्यमालम्ब्य, श्रुतधर्मव्यपेक्षया ॥ ८ ॥
२२ भावशुद्धिरपि ज्ञेया, यैषा मार्गानुसारिणी। प्रज्ञापनाप्रियाऽत्यर्थं, न पुन स्वाग्रहात्मिका ॥१॥
रागो द्वेषश्च मोहश्च, भावमालिन्यहेतव । एतदुत्कर्षतो ज्ञेयो, हन्तोत्कर्षोऽस्य तत्त्वत ॥ २ ॥
तथोत्कृष्टे च सत्यस्मिन्, शुद्धिर्वै शब्दमात्रकम् । स्वबुद्धिकल्पनाशिल्प—निर्मित नार्थवन्नयेत् ॥३॥
न मोहोद्रिक्तताऽभावे स्वाग्रहो जायते क्वचित् । गुणवत्पारतन्त्र्य हि, तदनुत्कर्षसाधनम् ॥ ४ ॥
अत एवागमज्ञोऽपि, दीक्षादानादिषु ध्रुवम् । क्षमाश्रमणहस्तेने—त्याह सर्वेषु कर्मसु ॥ ५ ॥
इद तु यस्य नास्त्येव, स नोपायेऽपि वर्तते । भावशुद्धे स्वपरयो—र्गुणाद्यज्ञस्य सा कुतः ॥ ६ ॥
तस्मादासन्नभव्यस्य, प्रकृत्या शुद्धचेतस । स्थानमानान्तरज्ञस्य, गुणवद्बहुमानिनः ॥७॥१७५॥

औचित्येन प्रवृत्तस्य, कुग्रहत्यागतो भृशम् । सर्वत्रागमनिष्ठस्य, भावशुद्धिर्यथोदिता ॥ ८ ॥ १७६ ॥

२३ यः शासनस्य मालिन्येऽनाभोगेनापि वर्त्तते । स तन्मिथ्यात्वहेतुत्वादन्येषां प्राणिनां ध्रुवम् ॥१॥
बध्नात्यपि तदेवालं, परं संसारकारणम् । विपाकदारुणं घोरं, सर्वानर्थविवर्धनम् ॥ २ ॥
यस्तून्नतौ यथाशक्ति, सोऽपि सम्यक्त्वहेतुताम् । अन्येषां प्रतिपद्येह, तदेवाप्नोत्यनुत्तरम् ॥ ३ ॥
प्रक्षीणतीव्रसङ्क्लेशं, प्रशमादिगुणान्वितम् । निमित्तं सर्वसौख्यानां, तथा सिद्धिसुखावहम् ॥ ४ ॥
अतः सर्वप्रयत्नेन, मालिन्यं शासनस्य तु । प्रेक्षावता न कर्तव्यं, प्रधानं पापसाधनम् ॥ ५ ॥
अस्माच्छासनमालिन्या–ज्जातौ जातौ विगर्हितम् । प्रधानभावादात्मानं, सदा दूरीकरोत्यलम् ॥६॥
कर्तव्या चोन्नतिः सत्यां, शक्ताविह नियोगतः । अवन्ध्यं बीजमेषां यत्, तत्त्वतः सर्वसम्पदाम् ।७।१८३।

---

१ ( पाठान्तर ) तत्तथा शोभनं दृष्ट्वा, साधु शासनमित्यदः । प्रपद्यन्ते तदैवैके, बीजमन्येऽस्य शोभनम् ॥ ४ ॥ सामान्येनापि नियमा–द्वर्णवादोऽत्र शासने । कालान्तरेण सम्यक्त्व–हेतुतां प्रतिपद्यते ॥५॥ चौरोदाहरणादेवं, प्रतिपत्तव्यमित्यदः । कौशाम्ब्यां स वणिग्भूत्वा, बुद्ध एकोऽपरो न तु ॥६॥ इति सर्वप्रयत्नेनो–पघातः शासनस्य तु । प्रेक्षावता न कर्तव्य, आत्मनो हितमिच्छता ॥७॥

अंत उन्नतिमाप्नोति, जातौ जातौ हितोदयाम्। क्षयं नयति मालिन्यं, नियमात्सर्ववस्तुषु ॥८॥१८४॥

२४ गेहाद् गेहान्तरं कश्चि—च्छोभनादधिकं नरः । याति यद्वत्सुधर्मेण, तद्वदेव भवान्तरम् ॥१॥
गेहाद् गेहान्तरं कश्चि—च्छोभनादितरन्नरः । याति यद्वदसद्धर्मा—त्तद्वदेव भवान्तरम् ॥ २ ॥
गेहाद् गेहान्तरं कश्चि—दशुभादधिकं नरः । याति यद्वन्महापापा—त्तद्वदेव भवाद् भवम् ॥ ३ ॥
गेहाद् गेहान्तरं कश्चि—दशुभादितरन्नरः । याति यद्वत्सुधर्मेण, तद्वदेव भवाद् भवम् ॥ ४ ॥
शुभानुबन्ध्यतः पुण्यं, कर्तव्यं सर्वथा नरैः । यत्प्रभावादपातिन्यो, जायन्ते सर्वसम्पदः ॥ ५ ॥
सदागमविशुद्धेन, क्रियते तच्च चेतसा । एतच्च ज्ञानवृद्धेभ्यो, जायते नान्यतः क्वचित् ॥ ६ ॥
[1]चित्तरत्नमसङ्क्लिष्ट—मान्तरं धनमुच्यते । यस्य तन्मुषितं दोषै—स्तस्य शिष्टा विपत्तयः ॥ ७ ॥
दया भूतेषु वैराग्यं, विधिवद्गुरुपूजनम् । विशुद्धा शीलवृत्तिश्च, पुण्यं पुण्यानुबन्ध्यदः ॥८॥१९२॥

---

१ (पाठान्तरम्) कर्तव्या चोन्नतिः मर्त्यैः, तत्प्रविह नियोगतः । प्रधान कारणं चेषा, तीर्थकृन्नामकर्मणः ॥ ८ ॥
२ (पाठान्तरम्) मच्छ्या मार्गगामित्वं, यदपि व्यज्यते ध्रुवम् । ज्ञानवृद्धप्रसादेन, एवं प्राप्नोत्यनुत्तरम् ॥ ७ ॥

२५ अतः प्रकर्षसम्प्राप्ता--द्विज्ञेयं फलमुत्तमम्। तीर्थकृत्त्वं सदौचित्य-प्रवृत्त्या मोक्षसाधकम् ।१।१९३।
सदौचित्यप्रवृत्तिश्च, गर्भादारभ्य तस्य यत्। तत्राप्यभिग्रहो न्याय्यः,श्रूयते हि जगद्गुरोः ॥ २ ॥
पित्रुद्वेगनिरासाय, महतां स्थितिसिद्धये। इष्टकार्यसमृद्ध्यर्थ—मेवम्भूतो जिनागमे ॥ ३ ॥
जीवतो गृहवासेऽस्मिन्, यावन्मे पितराविमौ। तावदेवाधिवत्स्यामि, गृहानहमपीष्टतः ॥ ४ ॥
इमौ शुश्रूषमाणस्य, गृहानावसतो गुरू। प्रव्रज्याप्यानुपूर्व्येण, न्याय्याऽन्ते मे भविष्यति ॥ ५ ॥
सर्वपापनिवृत्तिर्यत्, सर्वथैषा सतां मता। गुरूद्वेगकृतोऽत्यन्तं, नेयं न्याय्योपपद्यते ॥ ६ ॥
प्रारम्भमङ्गलं ह्यस्या, गुरुशुश्रूषणं परम्। एतौ धर्मप्रवृत्तानां, नृणां पूजास्पदं महत् ॥ ७ ॥
स कृतज्ञः पुमान् लोके, स धर्मगुरुपूजकः। स शुद्धधर्मभाक् चैव, य एतौ प्रतिपद्यते ॥ ८ ॥

२६ जगद्गुरोर्महादानं, सङ्ख्यावच्चेत्यसङ्गतम्। शतानि त्रीणि कोटीनां, सूत्रमित्यादि चोदितम् ॥१॥
अन्यैस्त्वसङ्ख्यमन्येषां, स्वतन्त्रेषूपवर्ण्यते। तत्तदेवेह तद्युक्तं, महच्छब्दोपपत्तितः ॥ २ ॥
ततो महानुभावत्वा—त्तेषामेवेह युक्तिमत्। जगद्गुरुत्वमखिलं, सर्वं हि महतां महत् ॥३॥२०३॥

एवमाहेह सूत्रार्थं, न्यायतोऽनवधारयन् । कश्चिन्मोहाच्चतस्तस्य, न्यायलेशोऽत्र दर्श्यते ॥४॥२०४॥
महादान हि सङ्ख्याव–दर्थ्यभावाज्जगद्गुरो । सिद्ध वरवरिकात–स्तस्या सूत्रे विधानत ॥ ५ ॥
तया सह कथ सङ्ख्या, युज्यते व्यभिचारत । तस्माद्यथोदितार्थं तु, सङ्ख्याग्रहणमिष्यताम् ॥ ६ ॥
महानुभावताप्येषा, तद्भावेन यदर्थिन । विशिष्टसुखयुक्तत्वात्, सन्ति प्रायेण देहिन ॥ ७ ॥
धर्मोद्यताश्च तद्योगा–त्ते तदा तत्त्वदर्शिन । महन्महत्त्वमस्यैव–मयमेव जगद्गुरु ॥ ८ ॥

२७ कश्चिदाहास्य दानेन, क इवार्थः प्रसिध्यति । मोक्षगामी ध्रुव ह्येष, यतस्तेनैव जन्मना ॥ १ ॥
उच्यते कल्प एवास्य, तीर्थकृन्नामकर्मणः । उदयात्सर्वसत्त्वानां, हित एव प्रवर्तते ॥ २ ॥
धर्माङ्गख्यापनार्थं च, दानस्यापि महामतिः । अवस्थौचित्ययोगेन, सर्वस्यैवानुकम्पया ॥ ३ ॥
शुभाशयकर ह्येतदाग्रहच्छेदकारि च । सदभ्युदयसाराङ्ग–मनुकम्पाप्रसूति च ॥ ४ ॥
ज्ञापक चात्र भगवान्, निष्क्रान्तोऽपि द्विजन्मने । देवदूष्य ददद्धीमा–ननुकम्पाविशेषत ॥ ५ ॥
इत्यमाशयभेदेन, नातोऽधिकरण मतम् । अपि त्वन्यद् गुणस्थान, गुणान्तरनिबन्धनम् ॥६॥२१४॥

ये तु दानं प्रशंसन्ती–त्यादि सूत्रं तु यत्स्मृतम्। अवस्थाभेदविषयं, द्रष्टव्यं तन्महात्मभिः ॥७॥२१५॥
एवं न कश्चिदस्यार्थ–स्तत्त्वतोऽस्मात्प्रसिद्ध्यति । अपूर्वः किन्तु तत्पूर्व–मेवं कर्म प्रहीयते ॥ ८ ॥

२८ अन्यस्त्वाहास्य राज्यादि-प्रदाने दोष एव तु। महाधिकरणत्वेन, तत्त्वमार्गेऽविचक्षणः ॥ १ ॥
अप्रदाने हि राज्यस्य, नायकाभावतो जनाः । मिथो वै कालदोषेण, मर्यादाभेदकारिणः ॥ २ ॥
विनश्यन्त्यधिकं यस्मा–दिह लोके परत्र च । शक्तौ सत्यामुपेक्षा च, युज्यते न महात्मनः ॥ ३ ॥
तस्मात्तदुपकाराय, तत्प्रदानं गुणावहम् । परार्थदीक्षितस्यास्य, विशेषेण जगद्गुरोः ॥ ४ ॥
एवं विवाहधर्मादौ, तथा शिल्पनिरूपणे । न दोषो ह्युत्तमं पुण्य-मित्थमेव विपच्यते ॥ ५ ॥
किञ्चेहाधिकदोषेभ्यः, सत्त्वानां रक्षणं तु यत् । उपकारस्तदेवैषां, प्रवृत्त्यङ्गं तथास्य च ॥ ६ ॥
नागादे रक्षणं यद्वद्-गर्त्ताद्याकर्षणेन तु । कुर्वन्न दोषवांस्तद्व-दन्यथासम्भवादयम् ॥ ७ ॥
इत्थं चैतदिहैष्टव्य–मन्यथा देशनाप्यलम् । कुधर्मादिनिमित्तत्वा–द्दोषायैव प्रसज्यते ॥ ८ ॥

२९ सामायिकं च मोक्षाङ्गं, परं सर्वज्ञभाषितम् । वासीचन्दनकल्पाना-मुक्तमेतन्महात्मनाम् ॥ १ ॥
निरवद्यमिदं ज्ञेय-मेकान्तेनैव तत्त्वतः । कुशलाशयरूपत्वात्, सर्वयोगविशुद्धितः ॥ २ ॥ २२६ ॥

यत्पुनः कुशल चित्त, लोकदृष्ट्या व्यवस्थितम्। तत्तथौदार्ययोगेऽपि, चिन्त्यमान न तादृशम् ।३।२२७।
मय्येव निपतत्वेत-ज्जगद्दुश्चरित यथा। मत्सुचरितयोगाच्च, मुक्तिः स्यात्सर्वदेहिनाम् ॥ ४ ॥
असम्भवीद यद्वस्तु, बुद्धाना निर्वृतिश्रुते। सम्भवित्वे त्विय न स्या-त्तत्रैकस्याप्यनिर्वृतौ ॥ ५ ॥
तदेव चिन्तन न्याया-त्तत्त्वतो मोहसङ्गतम्। साध्ववस्थान्तरे ज्ञेय, बोध्यादेः प्रार्थनादिवत् ॥ ६ ॥
अपकारिणि सद्बुद्धि-र्विशिष्टार्थप्रसाधनात्। आत्मम्भरित्वपिशुना, तदपायानपेक्षिणी ॥ ७ ॥
एव सामायिकादन्य-दवस्थान्तरभद्रकम्। स्याच्चित्त तत्तु सशुद्धे र्ज्ञेयमेकान्तभद्रकम् ॥ ८ ॥
३० सामायिकविशुद्धात्मा, सर्वथा घातिकर्मण। क्षयात्केवलमाप्नोति, लोकालोकप्रकाशकम् ॥ १ ॥
ज्ञाने तपसि चारित्रे, सत्येवास्योपजायते। विशुद्धिस्तदतस्तस्य, तथाप्राप्तिरिहेष्यते ॥ २ ॥
स्वरूपमात्मनो ह्येतत्, किन्त्वनादिमलावृतम्। जात्यरत्नांशुवत्तस्य, क्षयात्स्यात्तदुपायत ॥ ३ ॥
आत्मनस्तत्स्वभावत्वा-ल्लोकालोकप्रकाशकम्। अत एव तदुत्पत्ति-समयेऽपि यथोदितम् ॥ ४ ॥
आत्मस्थमात्मधर्मत्वात्, सवित्त्या चैवमिष्यते। गमनादेरयोगेन, नान्यथा तत्त्वमस्य तु ॥ ५ ॥
यच्च चन्द्रप्रभाद्यत्र, ज्ञात तज्ज्ञातमात्रकम्। प्रभा पुद्गलरूपा यत्, तद्धर्मो नोपपद्यते ॥६॥ २२८॥

अतः सर्वगताभास—मप्येतन्न यदन्यथा। युज्यते तेन सन्न्यायात्, संवित्त्याऽदोऽपि भाव्यताम् ।७।२३९।
नाद्रव्योऽस्ति गुणो लोके, न धर्मान्तौ विभुर्न च । आत्मा तद्गमनाद्यस्य, नाऽस्तु तस्माद्यथोदितम् ॥८॥

३१ वीतरागोऽपि सद्वेद्य—तीर्थकृन्नामकर्मणः । उदयेन तथा धर्म—देशनायां प्रवर्तते ॥ १ ॥
वरबोधित आरभ्य, परार्थोद्यत एव हि । तथाविधं समादत्ते, कर्म स्फीताशयः पुमान् ॥ २ ॥
यावत्सान्तिष्ठते तस्य, तत्तावत्सम्प्रवर्तते । तत्स्वभावत्वतो धर्म—देशनायां जगद्गुरुः ॥ ३ ॥
वचनं चैकमप्यस्य, हितां भिन्नार्थगोचराम्। भूयसामपि सत्त्वानां, प्रतिपत्तिं करोत्यलम् ॥ ४ ॥
अचिन्त्यपुण्यसम्भार--सामर्थ्यादेतदीदृशम् । तथा चोत्कृष्टपुण्यानां, नास्त्यसाध्यं जगत्त्रये ॥ ५ ॥
अभव्येषु च भूतार्था, यदसौ नोपपद्यते । तत्तेषामेव दौर्गुण्यं, ज्ञेयं भगवतो न तु ॥ ६ ॥
दृष्टश्चाभ्युदये भानोः, प्रकृत्या क्लिष्टकर्मणाम्। अप्रकाशो ह्युलूकानां, तद्वदत्रापि भाव्यताम् ॥ ७ ॥
इयं च नियमाज्ज्ञेया, तथानन्दाय देहिनाम्। तदात्वे वर्त्तमानेऽपि, भव्यानां शुद्धचेतसाम् ॥ ८ ॥

३२ कृत्स्नकर्मक्षयान्मोक्षो, जन्ममृत्य्वादिवर्जितः। सर्वबाधाविनिर्मुक्त, एकान्तसुखसङ्गतः ।१।२४९।

यत्र तु स्वेन सम्मिश्र, न च भ्रष्टमनन्तरम् । अभिलाषापनीत यत्, तज्ज्ञेय परम पदम् ॥२॥२५०॥
कश्चिदाहान्नपानादि–भोगाभावादसङ्गतम् । सुख वै सिद्धिनाथाना, प्रष्टव्य स पुमानिदम् ॥ ३ ॥
किम्फलोऽन्नादिसम्भोगो, बुभुक्षादिनिवृत्तये । तन्निवृत्ते फल किं स्यात्, स्वास्थ्य तेषां तु तत्सदा ॥४॥
अस्वस्थस्यैव भैषज्य, स्वस्थस्य तु न दीयते । अवाप्तस्वास्थ्यकोटीनां, भोगोऽन्नादेरपार्थक ॥५॥
अकिञ्चित्करक ज्ञेय, मोहाभावाद्रताद्यपि । तेषां कण्ड्वाद्यभावेन, हन्त कण्डूयनादिवत् ॥ ६ ॥
अपरायत्तमौत्सुक्य-रहित निष्प्रतिक्रियम् । सुख स्वाभाविक तत्र, नित्य भयविवर्जितम् ॥ ७ ॥
परमानन्दरूप तद्, गीयतेऽन्यैर्विचक्षणै । इत्थ सकलकल्याण–रूपत्वात्साम्प्रत सद् ॥ ८ ॥
सर्वेषा योगिनामेत–दन्येषा श्रुतिगोचर ॥ उपमाऽभावतो व्यक्त–मभिधातु न शक्यते ॥ ९ ॥
अष्टकाख्य प्रकरण, कृत्वा यत्पुण्यमर्जितम् ॥ विरहात्तेन पापस्य, भवन्तु सुखिनो जनाः ॥१०॥२५८॥

सुविहिताग्रणी सकलसूरिपुरन्दरपूर्वधरनिकटकालवर्ति भगवद्–हरिभद्रसूरिप्रवरप्रणीत—

अष्टकप्रकरण समाप्तम् ॥

# ॥ श्री लोकतत्त्वनिर्णय-ग्रन्थः ॥ ७ ॥

प्रणिपत्यैकमनेकं, केवलरूपं जिनोत्तमं भक्त्या ॥ भव्यजनबोधनार्थं, नृतत्त्वनिगमं प्रवक्ष्यामि ॥ १ ॥ भव्याऽभव्यविचारो, न हि युक्तोऽनुग्रहप्रवृत्तानाम् । कामं तथापि पूर्वं, परीक्षितव्या बुधैः परिषद् ॥ २ ॥ वज्रमिवाऽभेद्यमनाः, परिकथने चालनीव यो रिक्तः । कलुषयति यथा महिषः, पूनकवद्दोषमादत्ते॥ ३ ॥ जलमन्थनवत् कथितं, बधिरस्येव हि निरर्थकं तस्य । पुरतोऽन्धस्य च नृत्तं, तस्माद्ग्रहणं तु भद्रस्य ॥४॥ युग्मं ॥ आचार्यस्यैव तज्जाड्यं, यच्छिष्यो नाऽवबुध्यते। गावो गोपालकेनेव, कुतीर्थेनावतारिताः ॥ ५ ॥ किं वा करोत्यनार्याणा-मुपदेष्टा सुवागपि । तथा तीक्ष्णकुठारोऽपि, दुर्दारुणि विहन्यते ॥ ६ ॥ अप्रशान्तमतौ शास्त्र-सद्भावप्रतिपादनम्। दोषायाऽभिनवोदीर्णे, शमनीयमिव ज्वरे ॥ ७ ॥ उदितौ चन्द्रादित्यौ, प्रज्वलिता दीपकोटिरमलाऽपि । नोपकरोति यथाऽन्धे, तथोपदेशस्तमोऽन्धानाम् ॥ ८ ॥ एकतडागे यद्वत्, पिबति भुजङ्गः शुभं जलं गौश्च । परिणमति विषं सर्पे, तदेव गवि जायते क्षीरम् ॥ ९ ॥ सम्यग्ज्ञानतडागे, पिबतां ज्ञानसलिलं सतामसताम् । परिणमति सत्सु सम्यग्, मिथ्यात्वमसत्सु च तदेव ॥ १० ॥ एकरसमन्तरिक्षात्, पतति जलं तच्च मेदिनीं प्राप्य । नानारसतां गच्छति, पृथक् पृथग् भाजनविशेषात् ॥ ११ ॥ एकरसमपि तु सुवाक्यं, वक्तुर्वदनाद्विनिःसृतं तद्वत् । नानारसतां गच्छति, पृथक् पृथग्

भावमासाद्य ॥ १२ ॥ स्व दीप समवाप्य नेक्षति यथा सूर्योदये कौशिको, रान्द्रिं कङ्कुदुको न याति च यथा तुल्येऽपि पाके कृते। तद्वत्सर्वपदार्थभावनिकरं सम्प्राप्य जैन मत, योऽपि पापधियो न यान्ति कुजनास्तुल्ये कथासम्भवे ॥ १३ ॥ शार्दूलविक्रीडित ॥ हठो हठे यद्वदभिप्लुतः स्या-न्नौनौंचि यद्वा च यथा समुद्रे। तथा परप्रत्ययमात्रदक्षो, लोकः प्रमादाम्भसि पम्प्रमीति ॥ १४ ॥ यावत्परप्रत्ययकार्यबुद्धि-र्विवर्तते तावदु पायमध्ये। मन स्वमर्थेषु विघट्टनीय, न ह्यासपाशा नभसः पतन्ति ॥१५॥ यचिन्त्यमान न ददाति युक्ति, प्रत्यक्षतो नाप्यनुमानतश्च। तद् बुद्धिमान् को नु भजेत लोके, गोश्रृङ्गतः क्षीरसमुद्भवो न ॥१६॥ ये वैनेया विनयनिपुणैस्ते क्रियन्ते विनीताः, नाऽवैनेया विनयनिपुणैः शक्यते संविनेतुम्। दाहादिभ्यः समलममल स्यात्सुवर्णं सुवर्ण, नायस्पिण्डो भवति कनक छेददाहक्रमेण ॥ १७ ॥ मन्दाक्रान्ता ॥ आगमेन च युक्त्या च, योऽर्थः समभिगम्यते। परीक्ष्य हेमवद् ग्राह्यः, पक्षपाताग्रहेण किम् ॥ १८ ॥ मातृमोदकवद् बाला, ये गृह्णन्त्यविचारितम्। ते पश्चात्परितप्यन्ते, सुवर्णग्राहको यथा ॥ १९ ॥ श्रोतव्ये च कृतौ कर्णौ, वाग् बुद्धिश्च विचारणे। यः श्रुत न विचारेत, स कार्यं विन्दते कथम् ॥ २० ॥ नेत्रैर्निरीक्ष्य विषकण्टकसर्पकीटान्, सम्यक् यथा व्रजति तान् परिहृत्य सर्वान्। कुज्ञानकुश्रुतिकुदृष्टिकुमार्गदोषान्, सम्यग् विचारयत कोऽत्र परापवादः ॥ २१ ॥ वसन्ततिलका ॥ प्रत्यक्षतो न भगवानृषभो न विष्णु-रालोक्यते न च हरो न हिरण्य गर्भः। तेषां स्वरूपगुणमागमसम्प्रभावात्, ज्ञात्वा विचारयत कोऽत्र परापवादः ॥ २२ ॥ विष्णुः समुपत

गदायुधरौद्रपाणिः, शम्भुर्ललन्नरशिरोस्थिकपालमाली । अत्यन्तशान्तचरितातिशयस्तु वीरः, कं पूजयाम उपशान्तमशान्तरूपम् ॥ २३ ॥ दुर्योधनादिकुलनाशकरो बभूव, विष्णुर्हरस्त्रिपुरनाशकरः किलासीत् । क्रौञ्चं गुहोऽपि दृढशक्तिहरं चकार, वीरस्तु केवलजगद्धितसर्वकारी ॥२४॥ पीड्यो ममैष तु ममैष तु रक्षणीयो, वध्यो ममैष तु न चोत्तमनीतिरेषा । निःश्रेयसाभ्युदयसौख्यहितार्थबुद्धे-र्वीरस्य सन्ति रिपवो न च वञ्चनीयाः ॥ २५ ॥ रागादिदोषजनकानि वचांसि विष्णो-रुन्मत्तचेष्टितकराणि वचांसि शम्भोः । निःशेषदोषशमनानि मुनेस्तु सम्यग् , वन्द्यत्वमर्हति तु को नु विचारयध्वम् ॥ २६ ॥ यश्चोद्यतः परवधाय घृणां विहाय, त्राणाय यश्च जगतः शरणं प्रवृत्तः। रागी च यो भवति यश्च विमुक्तरागः, पूज्यस्तयोः क इह ब्रूत चिरं विचिन्त्य ॥२७॥ शक्रं वज्रधरं बलं हलधरं विष्णुं च चक्रायुधं, स्कन्दं शक्तिधरं श्मशाननिलयं रुद्रं त्रिशूलायुधम्। एतान् दोषभयार्दितान् गतघृणान् बालान् विचित्रायुधान्, नानाप्राणिषु चोद्यतप्रहरणान्, कस्तान्नमस्येद् बुधः ॥२८॥ न यः शूलं धत्ते न च युवतिमङ्के समदनां, न शक्तिं चक्रं वा न हलमुशलाद्यायुधधरम्। विनिर्मुक्तं क्लेशैः परहितविधावुद्यतधियं, शरण्यं भूतानां तमृषिमुपयातोऽस्मि शरणम् ॥ २९ ॥ शिखरिणी॥ रुद्रो रागवशात् स्त्रियं वहति यो हिंस्रो ह्रिया वर्जितो, विष्णुः क्रूरतरः कृतघ्नचरितः स्कन्दः स्वयं ज्ञातिहा । क्रूरार्या महिषान्तकृन्नरवसामांसास्थिकामातुरा, पानेच्छुश्च विनायको जिनवरे स्वल्पोऽपि दोषोऽस्ति कः ॥३०॥ ब्रह्मा लूनशिरा हरिर्दृशि सरुक् व्यालुप्तशिश्नो हरः । सूर्योऽप्युल्लिखितोऽनलोऽप्यखिल-

मुक्‍ मोमः कलङ्कशङ्कित । स्वर्णाभोऽपि विसस्थुलः खलु वपुःसर्वैकपस्थी कृतः, सन्मार्गस्खलनाद् भवन्ति विपदः प्रायः प्रभूणामपि ॥ ३१ ॥ बन्धुर्न नः स भगवानरयोऽपि नान्ये, साक्षान्न दृष्टतर एकतमोऽपि चैषाम् । श्रुत्वा वचः सुचरितं च पृथग्विशेषं, वीर गुणातिशयलोलतया श्रिताः स्मः ॥ ३२ ॥ नास्माकं सुगतः पिता न रिपवस्तीर्थ्या धनं नैव तैर्दत्तं नैव तथा जिनेन न हृतं किञ्चित् कणादादिभिः । किन्त्वेकान्तजगद्धितः स भगवान् वीरो यतश्चामलं, वाक्यं सर्वमलोपहर्तृ च यतस्तद्भक्तिमन्तो वयम् ॥ ३३ ॥ हितैषी यो नित्यं सततमुपकारी च जगतः, कृतं येन स्वस्य बहुविधरुजार्त्तं जगदिदम् । स्फुटं यस्य ज्ञेयं करतलगतं वेत्ति सकलम्, भव गण्य मन्तः सुगतमसमं भक्तिमनसः ॥ ३४ ॥ असर्वभावेन यदृच्छया वा, परानुवृत्त्या विचिकित्सया वा । ये त्वां नमस्यन्ति मुनीन्द्रचन्द्र, तेऽप्यामरीं सम्पदमाप्नुवन्ति ॥ ३५ ॥ यदा रागद्वेषावसुरसुररत्नापहरणे, कृत मायाविस्य भुवनहरणासक्तमतिना । तदा पूज्यो वन्द्यो हरिरपरिमुक्तोऽभ्युदयतया, विनिर्मुक्तं वीर न नमति जनो मोहबहुलः ॥ ३६ ॥ त्यक्तस्वार्थः परहितरतः सर्वदा सर्वरूपं, सर्वाकारं विविधमसमं यो विजानाति विश्वम् । ब्रह्मा विष्णुर्भवतु वरदः शङ्करो वा हरो वा, यस्याऽचिन्त्यं चरितमसमं भावतस्तं प्रपद्ये ॥ ३७ ॥ पक्षपातो न मे वीरे, न द्वेषः कपिलादिषु । युक्तिमद्वचनं यस्य, तस्य कार्यः परिग्रहः ॥ ३८ ॥ अवश्यमेषां कतमोऽपि सर्ववित्, जगद्धितैकान्तविशालशासनः । स एव मृग्यो मतिसूक्ष्मचक्षुषा, विशेषमुक्तैः किमनर्थपण्डितैः ॥ ३९ ॥ यस्य निखिलाश्च दोषा, न सन्ति सर्वे गुणाश्च विद्यन्ते । ब्रह्मा वा विष्णुर्वा, हरो जिनो वा नमस्तस्मै ॥ ४० ॥

लोकक्रियात्मतत्त्वे, निवदन्ते वादिनो विभिन्नार्थम्। अविदितपूर्वं येषां, स्याद्वादविनिश्चितं तत्त्वम् ॥४१॥ इच्छन्ति कृत्रिमं सृष्टि-वादिनः सर्वं एवमिति लोकम्। कृत्स्नं लोकं माहे-श्वरादयः सादिपर्यन्तम् ॥४२॥ नाऽनीश्वरजं केचित्, केचित्सोमाग्निसम्भवं लोकम्। द्रव्यादिषड्विकल्पं, जगदेतत् केचिदिच्छन्ति ॥४३॥ द्रव्यगुणकर्मसामान्य-युक्तिविशेषात्(न) कणाशिनस्तत्त्वम्। वैशेषिकमेताव-ज्जगदप्येतावदेतावत् ॥४४॥ केचिदिच्छन्ति काश्यपीयं, केचित्सर्वं जगन्मनुष्याद्यम्। दक्षप्राजापतीयं, त्रैलोक्यं केचिदिच्छन्ति ॥४५॥ केचित्प्राहुर्मूर्त्ति-स्त्रिधा गतैका हरिः शिवो ब्रह्मा। शम्भुर्बीजं जगतः, कर्त्ता विष्णुः क्रिया ब्रह्मा ॥४६॥ वैष्णवं केचिदिच्छन्ति, केचित् कालकृतं जगत्। ईश्वरप्रेरितं केचित्, केचिद् ब्रह्मविनिर्मितम् ॥४७॥ अव्यक्तप्रभवं सर्वं, विश्वमिच्छन्ति कापिलाः। विज्ञप्तिमात्रं शून्यं च, इति शाक्यस्य निश्चयः ॥४८॥ पुरुषप्रभवं केचिद्, दैवात् केचित् प्रभावतः। अक्षरात् क्षरितं केचित्, केचिदण्डोद्भवं जगत् ॥४९॥ याहच्छिकमिदं सर्वं, केचिद् भूतविकारजम्। केचिच्चानेकरूपं तु, बहुधा सम्प्रधाविताः ॥५०॥ जले विष्णुः स्थले विष्णु-राकाशे विष्णुमालिनि। विष्णुमालाकुले लोके, नास्ति किञ्चिदवैष्णवम् ॥५१॥ सर्वतः पाणिपादान्तं, सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमान् लोके, सर्वमाश्रित्य तिष्ठति ॥ ५२ ॥ ऊर्ध्वमूलमधःशाख-मश्वत्थं प्राहुरव्ययम्। छन्दांसि यस्य पत्राणि, यस्तं वेत्ति स वेदवित् ॥५३॥ तस्मिन्नेकार्णवीभूते, नष्टस्थावरजङ्गमे। नष्टामरनरे चैव, प्रणष्टोरग राक्षसे ॥५४॥ केवलं गह्वरीभूते, महाभूतविवर्जिते। अचिन्त्यात्मा विभुस्तत्र, शयानस्तप्यते तपः ॥ ५५ ॥

(सुगमम्) तत्र तस्य शयानस्य, नाभौ पद्मं विनिर्गतम्। तरुणार्कमण्डलनिभं, हृद्यं काञ्चनकर्णिकम् ॥५६॥ भगवान् दण्डकमण्डलु यज्ञोपवीतमृगचर्मवस्त्रसंयुक्तः। ब्रह्मा तत्रोत्पन्न-स्तेन जगन्मातरः सृष्टाः ॥५७॥ अदितिः सुरसङ्घानां, दितिरसुराणां मनुर्मनुष्याणाम्। विनता विहङ्गमानां, माता विश्वप्रकाराणाम् ॥५८॥ कद्रूः सरीसृपाणां, सुलसा माता तु नागजातीनाम्। सुरभिश्चतुष्पदानां, इला पुनः सर्वबीजानाम् ॥५९॥ प्रभवस्तासां विस्तर-मुपागतः केचिदेवमिच्छन्ति। केचिद्वदन्त्यवर्णं, सृष्टं वर्णादिभिस्तेन ॥ ६० ॥ कालः सृजति भूतानि, कालः संहरते प्रजाः। कालः सुप्तेषु जागर्ति, कालो हि दुरतिक्रमः ॥ ६१ ॥ प्रकृतीनां यथा राजा, रक्षार्थमिह चोद्यतः। तथा विश्वस्य विश्वात्मा, स जागर्ति महेश्वरः ॥ ६२ ॥ अन्यो(ज्ञो)जन्तुरनीशोऽय-मात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत्, स्वर्गं वा श्वभ्रमेव च ॥६३॥ सूक्ष्मोऽचिन्त्यो विकरणगणः सर्ववित् सर्वकर्त्ता, योगाभ्यासादमलिनधिया योगिना ध्यानगम्यः। चन्द्रार्काग्निक्षितिजलमरुद्दीक्षिताकाशमूर्त्ति-र्ध्येयो नित्यं शमसुखरतैरीश्वरः सिद्धिकामैः ॥६४॥ आसीदिदं तमोभूत मप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं, प्रसुप्तमिव सर्वतः ॥६५॥ ततः स्वयम्भूर्भगवा-नव्यक्तो व्यञ्जयन्निदम्। महाभूतादिवृत्तौजाः, प्रादुरासीत्तमोनुदः ॥६६॥ लोकानां स च वृद्ध्यर्थं, मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं, शूद्रं च विन्यवर्त्तयत् ॥६७॥ पञ्चविधमहाभूतं, नानाविधदेहनामसंस्थानम्। अव्यक्तसमुत्थानं, जगदेतत् केचिदिच्छन्ति ॥ ६८ ॥ सर्वगतं सामान्यं, सर्वेषामादिकारणं नित्यम्। सूक्ष्ममलिङ्गमचेतन-मक्रियमेकं प्रधानाख्यम् ॥६९॥ प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्

गणश्च षोडशकः। तस्मादपि षोडशकात्, पञ्चभ्यः पञ्चभूतानि ॥७०॥ मूलप्रकृतिरविकृति-र्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकश्च विकारो, न प्रकृतिर्न च विकृतिः पुरुषः ॥७१॥ गुणलक्षणो न यस्मात्, कार्यकारणलक्षणोऽपि नो यस्मात्। तस्मादन्यः पुरुषः, फलभोक्ता चेत्यकर्त्ता च ॥७२॥ प्रवर्त्तमानान् प्रकृतेरिमान् गुणान्, तमोवृतत्वाद्विपरीतचेतनः। अहङ्करोमीत्यबुधोऽपि मन्यते, तृणस्य कुञ्जीकरणेऽप्यनीश्वरः ॥७३॥ विज्ञप्तिमात्रमेवैत-दसमर्थाऽवभासनात्॥ यथा तैमिरकस्येह, कोशकीटादिदर्शनम् ॥७४॥ क्रोधशोकमदोन्माद-कामदोषाद्युपद्रुताः। अभूतानि च पश्यन्ति, पुरतोऽवस्थितानि च ॥७५॥ "पुरुष एवेदं सर्वं, यद्भूतं यच्च भाव्यं। उतामृतत्वस्येशानो, यदन्नेनातिरोहति॥ यदेजति, यन्नेजति, यद्दूरे, यदु अन्तिके, यदन्तरस्य सर्वस्य, यदु सर्वस्यास्य बाह्यो(ह्यतः), यस्मात्परं नापरमस्ति किञ्चिद्, यस्मान्नाणीयो, न ज्यायोऽस्ति कश्चिद्, वृक्ष इव स्तब्धो, दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषरूपेण सर्वं, एक एव हि भूतात्मा, तदा सर्वं प्रलीयते ॥७६॥" द्वावेव पुरुषौ लोके, क्षरश्चाऽक्षर एव च॥ क्षरश्च सर्वभूतानि, कूटस्थोऽक्षर उच्यते ॥७७॥ विद्यमानेषु शास्त्रेषु, ध्रियमाणेषु वक्तृषु। आत्मानं ये न जानन्ति, ते वै आत्महता नराः॥७८॥ आत्मा वै देवता सर्वः, सर्वमात्मन्यवस्थितम्। आत्मा हि जनयत्येष. कर्मयोगं शरीरिणाम् ॥७९॥ आत्मा धाता विधाता च, आत्मा च सुखदुःखयोः। आत्मा स्वर्गश्च नरक-आत्मा सर्वमिदं जगत् ॥८०॥ न कर्तृत्वं न कर्माणि, लोकस्य सृजते प्रभुः। स्वकर्मफलसंयोगः, स्वभावाद्विप्रवर्त्तते ॥८१॥ आत्मज्ञानस्वभावेन, स्वयं मननसम्भवात्।

स्वकर्मणश्च सम्भूतेः, स्वयम्मूर्तीव उच्यते ॥८२ - ा छिन्दन्ति शस्त्राणि, नैनं दहति पावकः । न चैनं क्लेदयन्त्यापो, न शोषयति मारुतः ॥८३॥ अच्छेद्योऽयमभेद्योऽय, निरुपाख्योऽयमुच्यते । नित्यः सर्वगतः स्थाणु रचलोऽय सनातनः ॥८४॥ सोऽक्षरः स च भूतात्मा, सम्प्रदायः स उच्यते । स प्राण स परं ब्रह्म, स हंसः पुरुषश्च सः ॥८५॥ नान्यस्तस्मात्परो द्रष्टा, श्रोता मन्ताऽपि वा भवेत् । न कर्ता न च भोक्ताऽस्ति, वक्ता नैव च विद्यते ॥८६॥ चेतनोऽध्यवसायेन, कर्मणा सन्निबध्यते । ततो भवस्तस्य भवे–त्तदभावात् परं पदम् ॥८७॥ उद्धरेद्दीनमात्मानं, नात्मानमवसादयेत् । आत्मनैवात्मनो बन्धु–रात्मैव रिपुरात्मनः ॥८८॥ सुतुष्टानि च मित्राणि, सुक्रुद्धाश्चैव शत्रवः । न हि मे तत्करिष्यन्ति, यत्र पूर्वकृतं मया ॥८९॥ शुभाऽशुभानि कर्माणि, स्वय कुर्वन्ति देहिनः । स्वयमेवोपकुर्वन्ति, दुःखानि च सुखानि च ॥९०॥ वने रणे शत्रुजलाग्निमध्ये, महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा, रक्षन्ति पुण्यानि पुराकृतानि ॥९१॥ स्वच्छन्दतो न हि धनं न गुणो न विद्या, नाप्येव धर्मचरणं न सुखं न दुःखम् । आरुह्य सारथिवशेन कृतान्तयानं, दैव यतो नयति तेन पथा व्रजामि ॥९२॥ यथा यथा पूर्वकृतस्य कर्मणः, फल निधानस्थमिवो(हो)पतिष्ठते । तथा तथा तत्प्रतिपादनोद्यता, प्रदीपहस्तेव मतिः प्रवर्तते ॥ ९३ ॥ विधिर्विधान नियतिः स्वभावः, कालो ग्रहा ईश्वरकर्मदैवम् । भाग्यानि कर्माणि यमः कृतान्ता, पर्यायनामानि पुराकृतस्य ॥९४॥ यत्तत्पुराकृत कर्म, न स्मरन्तीह मानवाः । तदिद पाण्डवश्रेष्ठ । दैवमित्यभिधीयते ॥९५॥ कः कण्टकानां प्रकरोति तैक्ष्ण्य, विचित्रता वा मृगपक्षिणां च । स्वभा

वतः सर्वमिदं प्रवृत्तं, न कामचारोऽस्ति कुतः प्रयत्नः ॥९६॥ वदर्याः कण्टकस्तीक्ष्ण, ऋजुरेकश्च कुञ्चितः। फलं च वर्त्तुलं तस्या, वद केन विनिर्मितम् ॥९७॥ अक्षरात् क्षरितः काल-स्तस्माद्व्यापक इष्यते। व्यापकादि-प्रकृत्यन्तां, तां हि सृष्टिं प्रचक्षते॥९८॥ अक्षरांशस्ततो वायु-स्तस्मात्तेजस्ततो जलम्। जलात् प्रसूता पृथिवी, भूतानामेष सम्भवः ॥ ९९ ॥ नारायणपराऽव्यक्ता-दण्डमव्यक्तसम्भवम्। अण्डस्यान्तस्त्वमी भेदाः, सप्त द्वीपा च मेदिनी॥१००॥ गर्भोदकं समुद्राश्च, जरायुश्चापि पर्वताः। तस्मिन्नण्डे त्वमी लोकाः, सप्त सप्त प्रति-ष्ठिताः ॥१०१॥ तत्रेहाद्यः स भगवा-नुषित्वा परिवत्सरम्। स्वयमेवात्मना ध्यात्वा, तदण्डमकरोद् द्विधा ॥ ताभ्यां स शकलाभ्यां तु, दिवं भूमिं च निर्ममे ॥ षट्पदी ॥१०२॥ हेतुरहिता भवन्ति हि, भावाः प्रतिसमय-भाविनश्चित्राः। भावाहते न भाव्यं, सम्भवरहितं खपुष्पमिव ॥१०३॥ प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः, सोऽवश्यं भवति नृणां शुभोऽशुभो वा। भूतानां महति कृतेऽपि हि प्रयत्ने, नाऽभाव्यं भवति न भावि-नोऽस्ति नाशः ॥१०४॥ प्रतिसमयं परिणामः, प्रत्यात्मगतश्च सर्वभावानाम्। सम्भवति नेच्छयापि, स्वेच्छा क्रमवर्त्तिनी यस्मात् ॥१०५॥ सत्यं पिशाचाः स्म वने वसामो, भेरीं कराग्रैरपि न स्पृशामः। अयं च वादः प्रथितः पृथिव्यां, भेरीं पिशाचाः किल ताडयन्ति ॥ १०६ ॥ (गद्यम्) "पृथिव्यापस्तेजोवायुरिति तत्त्वानि, तत्समुदाये शरीरेन्द्रियविषयसंज्ञा, मदशक्तिवच्चैतन्यं जलबुद्बुदवज्जीवाश्चैतन्यविशिष्टः कायः पुरुष इति ॥" भौतिकानि शरीराणि, विषयाः करणानि च। तथापि मन्दैरन्यस्य, कर्तृत्वमुपदिश्यते ॥१०७॥ एतावानेव लो-

कोऽपि, यावानिन्द्रियगोचरः। भद्रे! वृकपद पश्य (पश्य), यद्वदन्ति बहुश्रुताः ॥१०८॥ तपांसि यातनाश्चित्राः, संयमो भोगवञ्चना। अग्निहोत्रादिकं कर्म, बालक्रीडेव लक्ष्यते ॥१०९॥ कारणानि विभिन्नानि, कार्याणि च यतः पृथक्। तस्मात्त्रिष्वपि कालेषु, नैव कर्मोऽस्ति निश्चयः ॥११०॥ तेषामेवानिशीत-मसद्भूत सृष्टिवादि नामिष्टम्। एतद्युक्तिविरुद्ध, यथा तथा सम्प्रवक्ष्यामि ॥ १११ ॥ सदसज्जगदुत्पत्तिः, पूर्वस्मात्कारणात् सतो नास्ति। असतो हि नास्ति कर्ता, सदसत्कथां सम्भवाभावात् ॥११२॥ यदसत्तस्योत्पत्ति-स्त्रिष्वपि कालेषु निश्चित नास्ति। खरशृङ्गमुदाहरण, तस्मात्स्वाभाविको लोकः ॥११३॥ मूर्तोऽमूर्त्तं द्रव्य, सर्वं न विनाशमेति नान्यत्वम्। यद्वस्त्वेतत्प्रायः, पर्यायविनाशि जैनानाम् ॥११४॥ काश्यपदक्षादीना, यदभिप्रायेण जायते लोक। लोकाभावे तेषा-मस्तित्वं संस्थित कुत्र? ॥ ११५ ॥ सर्व परम्पराय, यामि विनाश यदा तदा लोकः। किं भवति बुद्धिरव्यक्त-माहित तस्य किं रूपम् ॥ ११६ ॥ यदमूर्तं मूर्त्तं वा, स्वलक्षण विद्यते स्वलक्षणतः। तद्द्रूपकं निर्दिष्ट, सर्वं सर्वोत्तमादेशैः ॥ ११७ ॥ द्रव्यमरूप्यम(मिहारूप्य)रूपि च, यदिहास्ति हि तस्य लक्षण सर्वम्। तल्लक्षण न यस्य तु, तद्वन्ध्यापुत्रवत् भाव्यम् ॥ ११८ ॥ यदुत्पत्तिर्न भवति, तुरगविषाणस्य खरविषाणाभात्। उत्पत्तिरभूतेभ्यो, ध्रुव तथा नास्ति भूतानाम् ॥ ११९ ॥ तत्र व्यक्तमलिङ्गा-दव्यक्ता बुद्धिर्विष्यसि कदाचित्। सोमादीनां तनुस-म्भवोऽस्ति यदि नास्ति भूतानि ॥ १२० ॥ असति महा भूतगणे, तेषामेव तनुसम्भवो नास्ति। पशुपतिदिनपतिवस्त्रो-माब्जपितामहहरीणान्तु ॥१२१॥ बुद्धिमनोभे

दानां, देहाभावे च सम्भवो नास्ति। ईहापोहाभाव-स्तदभावे सम्भवाभावः ॥१२२॥ तदभावेऽस्ति न चिन्ता, चिन्ताभावे क्रियागुणो नास्ति। कर्तृत्वमनुपपन्नं, क्रियागुणानामसम्भवतः ॥१२३॥ तेन कृतं यदि च जगत्, स कृतः केनाकृतोऽप्यबुद्धिर्वः। विज्ञेयः सत्येवं, भवप्रपञ्चोऽपि तद्वदिह ॥१२४॥ अभ्युपगम्येदानीं, जगतः सृष्टिर्वदामहे नास्ति। पुरुषार्थैः कृतकृत्यो, न करोत्याप्तो जगत् कलुषम् ॥१२५॥ अपकारः प्रेताद्यैः, कस्तस्य कृतः सुरादिभिः किं वा। संयोजिता यदेते, सुखदुःखाभ्यामहेतुभ्याम् ॥ १२६ ॥ तुल्ये सति सामर्थ्ये, किं न कृतो वित्तसंयुतो लोकः। येन कृतो बहुदुःखो, जन्मजरामृत्युपथि लोकः ॥ १२७ ॥ यदि तेन कृतो लोको, भूयोपि किमस्य सङ्क्षयः क्रियते। उत्पादितः किमर्थं, यदि सङ्क्षेपणीय एवासौ ॥ १२८ ॥ कः सङ्क्षिप्तेन गुणः, को वा सृष्टेन तस्य लोकेन। को वा जन्मादिकृतं, दुःखं सम्प्रापितैः सत्त्वैः ॥ १२९ ॥ भूतानुगतशरीरः, कुम्भाद्यं कुम्भकृद्यथा कृत्वा। असकृद्भिनत्ति तद्वत्, कर्त्ता भूतानि निस्त्रिंशः ॥१३०॥ भवसम्भवदुःखकरं, निष्कारणवैरिणं सदा जगतः। कस्ते व्रजेच्छरणं, सूरिः श्रेयोऽर्थमतिपापम् ॥१३१॥ स्वकृतं जगत्क्षपयतः, तस्य न बन्धोऽस्ति बुद्धिरन्येषाम्। किं न भवति पुत्रवधे, बन्धः पितुरुग्रचित्तस्य ॥१३२॥ जगतः प्रागुत्पत्ति-र्यदि कर्तुर्विग्रहात्कथं तद्वत्। अधुना न भवति तस्यै-व विग्रहात्सम्भवस्तस्य ॥१३३॥ विविधासु यथा योनिषु, सत्त्वानां साम्प्रतं समुत्पत्तिः। नित्यं तथैव सिद्धिः, प्राहुर्लोकस्थितिविधिज्ञाः ॥ १३४ ॥ एवं विचार्यमाणाः, सृष्टिविशेषाः परस्परविरुद्धाः। हरिहरविचारतुल्या, युक्तिविहीनाः

परित्याज्याः ॥ १३५ ॥ मुक्तो वाऽमुक्तो वा-ऽस्ति तत्र मूर्त गत्कर्त्ता । सदसद्वापि करोति हि, न युज्यते सर्वथा करणम् ॥ १३६ ॥ मुक्तो न करोति जग-च्च कर्मणा पच्यते विगतरागः । रागाद्वियुतः सतनु-निपत्यते कर्मणाऽवश्यम् ॥ १३७ ॥ ज्ञानचरित्रादिगुणैः, ससिद्धाः शाश्वताः शिवाः सिद्धो । तनुकरणकर्मरहिता, पदवस्तेषां प्रभुर्नास्ति ॥ १३८ ॥ कर्मजनित प्रभुत्वं; संसारे क्षेत्रतश्च तन्नियमम् । प्रभुरेकस्तनुरहितः, कर्त्ता च न विद्यते लोके ॥१३९॥ अवगाहाकृतिरूपैः, स्थैर्यस्वभावेन शाश्वते लोके। कृतकत्वमनित्यत्वं, मेर्वादीनां न सम्भवति ॥ १४० ॥ गुणवृद्धिहानिमिश्रा, केनचिन्न मही कृता न लोकश्च । इति सर्वमिव प्राहुः, त्रिष्वपि लोकेषु सर्वविदः ॥ १४१ ॥ अद्वावकमनीशं, ज्योतिश्चक्रं च जीवचक्रं च । नित्यं पुनन्ति लोका-नुभावकर्मानुभावाभ्याम् ॥ १४२ ॥ चन्द्रादित्यसमुद्रा-स्त्रिष्वपि लोकेषु नातिवर्त्तन्ते । प्रकृतिप्रमाणमात्मा-यमित्युवाचोत्तमज्ञानम् ॥ १४३ ॥ सर्वाः पृथिव्यश्च समुद्रशैलाः, सस्वर्गसिद्धालयमन्तरीक्षम् । अकृत्रिमा शाश्वत एव लोकः, अतो(न्तो) पर्यन्तवलौकिकं तु ॥ १४४ ॥ प्रकृतीश्वरौ विधानं, कालः सृष्टिर्विधिश्च दैवं च । इति नामघनो लोकः, स्वकर्मतः संसरत्यवशः ॥ १४५ ॥ कर्मानुभावनिर्मित- नैकाकृतिजीवजातिगहनस्य । लोकस्यास्य न पर्यव-सानं नैवादिभावश्च ॥ १४६ ॥ तस्मादनादिनिधनं व्यसनोरुभीमं, जन्मारथोपहतनेम्यतिरागतुम्बम् । घोरं स्वकर्मपवनेरितलोकचक्रं, भ्राम्यत्यनारतमिदं किमिहेश्वरेण ॥ १४७ ॥

॥ श्रीलोकतत्त्वनिर्णयः सम्पूर्णः ॥

# ॥ श्रीधर्मबिन्दुप्रकरणम् ॥ ८ ॥

॥ अथ प्रथमोऽध्यायः ॥ प्रणम्य परमात्मानं, समुद्धृत्य श्रुतार्णवात् ॥ धर्मबिन्दुं प्रवक्ष्यामि, तोयबिन्दु-
मिवोदधेः ॥१॥ धनदो धनार्थिनां प्रोक्तः, कामिनां सर्वकामदः ॥ धर्म एवापवर्गस्य, पारम्पर्येण साधकः ॥२॥
वचनाद्यदनुष्ठान-मविरुद्धाद्यथोदितम् ॥ मैत्र्यादिभावसंयुक्तं, तद्धर्म इति कीर्त्यते ॥३॥ सोऽयमनुष्ठातृभेदात्
द्विविधो-गृहस्थधर्मो यतिधर्मश्चेति ॥१॥ तत्र च गृहस्थधर्मोऽपि द्विविधः-सामान्यतो विशेषतश्चेति ॥२॥ तत्र
सामान्यतो गृहस्थधर्मः कुलक्रमागतमनिन्द्यं विभवाद्यपेक्षया न्यायतोऽनुष्ठानमिति ॥ ३ ॥ न्यायोपात्तं हि
वित्तमुभयलोकहितायेति ॥ ४ ॥ अनभिशङ्कनीयतया परिभोगाद् विधिना तीर्थगमनाच्चेति ॥ ५ ॥ अहितायै-
वान्यदिति ॥ ६ ॥ तदनपायित्वेऽपि मत्स्यादिगलादिवद्विपाकदारुणत्वात् इति ॥७॥ न्याय एव ह्यर्थाप्त्यु-
पनिषत्परेति समयविद इति ॥ ८ ॥ ततो हि नियमतः प्रतिबन्धककर्मविगम इति ॥ ९ ॥ सत्यस्मिन्नाय-
त्यामर्थसिद्धिरिति ॥ १० ॥ अतोऽन्यथाऽपि प्रवृत्तौ पाक्षिकोऽर्थलाभो, निःसंशयस्त्वनर्थ इति ॥ ११ ॥ तथा-
समानकुलशीलादिभिरगोत्रजैर्वैवाह्यमन्यत्र बहुविरुद्धेभ्य इति ॥ १२ ॥ तथा-दृष्टादृष्टबाधाभीतता इति
॥ १३ ॥ तथा-शिष्टचरितप्रशंसनमिति ॥ १४ ॥ तथा-अरिषड्वर्गत्यागेनाविरुद्धार्थप्रतिपत्त्येन्द्रियजय इति

॥ १५ ॥ तथा-उपप्लुतस्थानत्याग इति ॥ १६ ॥ तथा-स्वयोग्यस्याऽऽश्रयणमिति ॥ १७ ॥ तथा-प्रधान
साधुपरिग्रह इति ॥ १८ ॥ तथा-स्थाने गृहकरणमिति ॥ १९ ॥ अतिप्रकटातिगुप्तमस्थानमनुचितप्रातिवेश्यं
चेति ॥ २० ॥ लक्षणोपेतगृहवास इति ॥ २१ ॥ निमित्तपरीक्षेति ॥ २२ ॥ तथा-अनेकनिर्गमादिवर्जन
मिति ॥ २३ ॥ तथा-विभवाद्यनुरूपो वेषो विरुद्धत्यागेनेति ॥ २४ ॥ तथा-आयोचितो व्यय इति ॥ २५ ॥
तथा-प्रसिद्धदेशाचारपालनमिति ॥ २६ ॥ तथा-गर्हितेषु गाढमप्रवृत्तिरिति ॥ २७ ॥ तथा-सर्वेष्ववर्णवाद
त्यागो विशेषतो राजादिष्विति ॥ २८ ॥ तथा-असदाचारैरसंसर्ग इति ॥ २९ ॥ संसर्गः सदाचारैरिति
॥ ३० ॥ तथा-मातापितृपूजेति ॥ ३१ ॥ तथा-अनुद्वेजनीया प्रवृत्तिरिति ॥ ३२ ॥ तथा-भर्तव्यभरणमिति
॥ ३३ ॥ तथा-तस्य यथोचितं विनियोग इति ॥ ३४ ॥ तथा-तत्प्रयोजनेषु बद्धलक्षतेति ॥ ३५ ॥ तथा-अपा
यपरिरक्षोद्योग इति ॥ ३६ ॥ तथा-गर्ह्ये ज्ञानस्वगौरवरक्षे इति ॥ ३७ ॥ तथा-देवातिथिदीनप्रतिपत्तिरिति
॥ ३८ ॥ तथौचित्याबाधनमुत्तमनिदर्शनेनेति ॥ ३९ ॥ तथा-सात्म्यतः कालभोजनमिति ॥ ४० ॥ तथा-
लौल्यत्याग इति ॥ ४१ ॥ तथा-अजीर्णेऽभोजनमिति ॥ ४२ ॥ तथा-बलापाये प्रतिक्रियेति ॥ ४३ ॥ तथा-
अदेशकालचर्यापरिहार इति ॥ ४४ ॥ तथा-यथोचितलोकयात्रेति ॥ ४५ ॥ तथा-हीनेषु हीनक्रम इति
॥ ४६ ॥ तथा-अतिसङ्गवर्जनमिति ॥ ४७ ॥ तथा-वृत्तस्थज्ञानवृद्धसेवेति ॥ ४८ ॥ तथा-परस्परानुपघातेना
न्योऽन्यानुबद्धत्रिवर्गप्रतिपत्तिरिति ॥ ४९ ॥ तथा-अन्यतरबाधासम्भवे मूलाबाधेति ॥ ५० ॥ तथा-बलाबला

पेक्षणमिति ॥ ५१ ॥ तथा–अनुबन्धे प्रयत्न इति ॥ ५२ ॥ तथा–कालोचितापेक्षेति ॥ ५३ ॥ तथा–प्रत्यहं धर्मश्रवणमिति ॥ ५४ ॥ तथा–सर्वानभिनिवेश इति ॥५५॥ तथा–गुणपक्षपातितेति ॥५६॥ तथा–ऊहापोहादियोग इतीति ॥५७॥ एवं स्वधर्मसंयुक्तं, सद्गार्हस्थ्यं करोति यः ॥ लोकद्वयेऽप्यसौ धीमान्, सुखमाप्नोत्यनिन्दितम् ॥ ४ ॥ दुर्लभं प्राप्य मानुष्यं, विधेयं हितमात्मनः ॥ करोत्यकाण्ड एवेह, मृत्युः सर्वं न किञ्चन ॥५॥ सत्येतस्मिन्नसारासु, सम्पत्स्वविहिताग्रहः ॥ पर्यन्तदारुणासूच्चै–र्धर्मः कार्यो महात्मभिः ॥ ६ ॥ इति ॥

॥ अथ द्वितीयोऽध्यायः ॥ प्रायः सद्धर्मबीजानि, गृहिष्वेवंविधेष्वलम् ॥ रोहन्ति विधिनोप्तानि, यथा बीजानि सत्क्षितौ ॥ ७ ॥ बीजनाशो यथाऽभूमौ, प्ररोहो वेह निष्फलः ॥ तथा सद्धर्मबीजाना–मपात्रेषु विदुर्बुधाः ॥ ८ ॥ न साधयति यः सम्य–गज्ञः स्वल्पं चिकीर्षितम् ॥ अयोग्यत्वात्कथं मूढः, स महत्साधयिष्यति ॥ ९ ॥ इति ॥ इति सद्धर्मदेशनार्ह उक्तः, इदानीं तद्विधिमनुवर्तयिष्याम इति ॥ १ ॥ तत्प्रकृतिदेवताधिमुक्तिज्ञानमिति ॥ २॥ तथा–साधारणगुणप्रशंसेति ॥ ३ ॥ तथा–सम्यक् तदधिकाख्यानमिति॥ ४॥ तथा–अबोधेऽप्यनिन्देति ॥५॥ शुश्रूषाभावकरणमिति ॥ ६॥ तथा–भूयो भूय उपदेश इति ॥७॥ तथा–बोधे प्रज्ञोपवर्णनमिति ॥ ८ ॥ तथा–तन्त्रावतार इति ॥ ९ ॥ तथा–प्रयोग आक्षेपण्या इति ॥ १० ॥ तथा–ज्ञानाद्याचारकथनमिति ॥ ११ ॥ तथा–निरीहशक्यपालनेति ॥ १२ ॥ तथा–अशक्ये भावप्रतिपत्तिरिति ॥ १३ ॥ तथा–पालनोपायोपदेश इति ॥ १४ ॥ तथा–फलप्ररूपणेति ॥ १५॥ देवर्द्धिवर्णनमिति ॥ १६॥

तथा—सुकुलागमनोक्तिरिति ॥ १७ ॥ तथा—कल्याणपरम्पराख्यानमिति ॥ १८ ॥ तथा—असदाचारगर्हेति ॥ १९ ॥ तथा—तत्स्वरूपकथनमिति ॥ २० ॥ तथा—स्वयं परिहार इति ॥ २१ ॥ तथा—ऋजुभावाऽऽसेवनमिति ॥ २२ ॥ तथा—अपायहेतुत्वदेशनेति ॥ २३ ॥ नारकदुःखोपवर्णनमिति ॥ २४ ॥ तथा—दुष्कुलजन्मप्रशस्तिरिति ॥ २५ ॥ दुःखपरम्परानिवेदनमिति ॥ २६ ॥ तथा—उपायतो मोहनिन्देति ॥ २७ ॥ तथा—सज्ज्ञानप्रशंसनमिति ॥ २८ ॥ तथा—पुरुषकारसत्कथेति ॥ २९ ॥ तथा—वीर्यर्द्धिवर्णनमिति ॥ ३० ॥ तथा—परिणते गम्भीरदेशनायोग इति ॥ ३१ ॥ श्रुतधर्मकथनमिति ॥ ३२ ॥ बहुत्वात्परीक्षावतार इति ॥ ३३ ॥ कषादिप्ररूपणेति ॥ ३४ ॥ विधिप्रतिषेधौ कष इति ॥ ३५ ॥ तत्सम्भवपालनाचेष्टोक्तिश्छेद इति ॥ ३६ ॥ उभयनिबन्धनभाववादस्ताप इति ॥ ३७ ॥ अमीषामन्तरदर्शनमिति ॥ ३८ ॥ कषच्छेदयोरयत्न इति ॥ ३९ ॥ तद्भावेऽपि तापाभावेऽभाव इति ॥ ४० ॥ तच्छुद्धौ हि तत्साफल्यमिति ॥ ४१ ॥ फलवन्तौ च तौ वास्तवाविति ॥ ४२ ॥ अन्यथा याचितकमण्डनमिति ॥ ४३ ॥ नासत्स्ववेदिवादः सम्यग्वाद इति ॥ ४४ ॥ बन्धमोक्षोपपत्तितस्तच्छुद्धिरिति ॥४५॥ इयं बध्यमानबन्धनभाव इति ॥ ४६ ॥ कल्पनामात्रमन्यथेति ॥४७॥ बध्यमान आत्मा बन्धनं वस्तुसत् कर्मेति ॥ ४८ ॥ हिंसादयस्तद्योगहेतवः, तदितरे तदितरस्येति ॥ ४९ ॥ प्रवाहतोऽनादिमानिति ॥ ५० ॥ कृतकत्वेऽप्यतीतकालवदुपपत्तिरिति ॥ ५१ ॥ वर्तमानताकल्पं कृतकत्वमिति ॥ ५२ ॥ परिणामिन्यात्मनि हिंसादयो, भिन्नाभिन्ने च देहादिति ॥५३॥ अन्यथा तदयोग इति ॥५४॥

नित्य एवाविकारतोऽसम्भवादिति ॥५५॥ तथा—अनित्ये चापराहिंसनेनेति ॥५६॥ तथा—भिन्न एव देहान्न स्पृष्टवेदनमिति ॥ ५७ ॥ तथा—निरर्थकश्चानुग्रह इति ॥ ५८ ॥ अभिन्न एवामरणं वैकल्यायोगादिति ॥ ५९ ॥ मरणे परलोकाभाव इति ॥ ६० ॥ तथा—देहकृतस्यात्मनाऽनुपभोग इति ॥ ६१ ॥ तथा—आत्मकृतस्य देहेनेति ॥ ६२ ॥ इष्टेष्टबाधेति ॥ ६३ ॥ अतोऽन्यथैतत्सिद्धिरिति तत्त्ववाद इति ॥६४॥ परिणामपरीक्षेति ॥६५॥ शुद्धे बन्धभेदकथनमिति ॥ ६६ ॥ तथा—वरबोधिलाभप्ररूपणेति ॥ ६७ ॥ तथाभव्यत्वादितोऽसाविति ॥६८॥ ग्रन्थिभेदे नात्यन्तसंक्लेश इति ॥ ६९ ॥ न भूयस्तद्बन्धनमिति ॥७०॥ तथा—असत्यपाये न दुर्गतिरिति ॥७१॥ तथा—विशुद्धेश्चारित्रमिति ॥ ७२ ॥ भावनातो रागादिक्षय इति ॥७३॥ तद्भावेऽपवर्ग इति ॥७४॥ स आत्यन्तिको दुःखविगम इति ॥ ७५ ॥ एवं संवेगकृद्धर्म, आख्येयो मुनिना परः ॥ यथाबोधं हि शुश्रूषोर्भावितेन महात्मना ॥१०॥ अबोधेऽपि फलं प्रोक्तं, श्रोतॄणां मुनिसत्तमैः ॥ कथकस्य विधानेन, नियमाच्छुद्धचेतसः ॥ ११ ॥ नोपकारो जगत्यस्मिंस्तादृशो विद्यते क्वचित् ॥ यादृशी दुःखविच्छेदाद्देहिनां धर्मदेशना ॥ १२ ॥

॥ अथ तृतीयोऽध्यायः ॥ सद्धर्मश्रवणादेवं, नरो विगतकल्मषः ॥ ज्ञाततत्त्वो महासत्त्वः, परं संवेगमागतः ॥१३॥ धर्मोपादेयतां ज्ञात्वा, सञ्जातेच्छोऽत्र भावतः ॥ दृढं स्वशक्तिमालोच्य, ग्रहणे सम्प्रवर्त्तते ॥ १४ ॥ योग्यो ह्येवंविधः प्रोक्तो, जिनैः परहितोद्यतैः। फलसाधनभावेन, नातोऽन्यः परमार्थतः ॥ १५ ॥ इति सद्धर्मग्रहणार्ह उक्तः, साम्प्रतं तत्प्रदानविधिमनुवर्णयिष्याम इति ॥ १ ॥ धर्मग्रहणं हि सत्प्रतिपत्तिमद्भिमलभावकरणमिति

॥२॥ तच्च प्रायो जिनवचनतो विधिनेति ॥ ३ ॥ इति प्रदानफलवत्तेति ॥ ४ ॥ सति सम्यग्दर्शने न्याय्यमणुव्रतादीनां ग्रहण, नान्यथेति ॥ ५ ॥ जिनवचनश्रवणादेः कर्मक्षयोपशमादिसः सम्यग्दर्शनमिति ॥ ६ ॥ प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं तदिति ॥ ७ ॥ उत्तमधर्मप्रतिपत्त्यसहिष्णोस्तत्कथनपूर्वमुपस्थितस्य विधिनाऽणुव्रतादिदानमिति ॥ ८ ॥ सहिष्णोः प्रयोगेऽन्तराय इति ॥ ९ ॥ अननुमतिश्चेतरथेति ॥ १० ॥ अकथने उभयाफल आज्ञाभङ्ग इति ॥ ११ ॥ भगवद्वचनप्रामाण्यादुपस्थितदाने दोषाभाव इति ॥ १२ ॥ गृहपतिपुत्रमोक्षज्ञाताविति ॥ १३ ॥ योगवन्दननिमित्तदिगाकारशुद्धिर्विधिरिति ॥ १४ ॥ तथा उचितोपचारश्चेति ॥ १५ ॥ स्थूलप्राणातिपातादिभ्यो विरतिरणुव्रतानि पञ्चेति ॥ १६ ॥ तथा-दिग्व्रत-भोगोपभोगमाना-ऽनर्थदण्डविरतयस्त्रीणि गुणव्रतानीति ॥ १७ ॥ तथा-सामायिक-देशावकाशिक-पोषधोपवासा-ऽतिथिसंविभागाश्चत्वारि शिक्षापदानीति ॥ १८ ॥ ततश्च-एतदारोपणं दानं यथाऽर्हं, साकल्यवैकल्याभ्यामिति ॥ १९ ॥ गृहीतेष्वतिचारपालनमिति ॥ २० ॥ शङ्का १ काङ्क्षा २ विचिकित्सा ३-ऽन्यदृष्टिप्रशंसासंस्तवाः ४-५ सम्यग्दृष्टेरतिचारा इति ॥ २१ ॥ तथा-व्रतशीलेषु पञ्च पञ्च यथाक्रममिति ॥ २२ ॥ बन्ध १ वध २ च्छविच्छेदा ३ तिभारारोपणा ४ ऽन्नपाननिरोधा ५ इति ॥ २३ ॥ मिथ्योपदेश १ रहस्याभ्याख्यान २ कूटलेखक्रिया ३ न्यासापहार ४ स्वदारमन्त्रभेदा ५ इति ॥ २४ ॥ स्तेनप्रयोग १ तदाहृतादान २ विरुद्धराज्यातिक्रम ३ हीनाधिकमानोन्मान ४-

प्रतिरूपकव्यवहारा ५ इति ॥ २५ ॥ परविवाहकरणे १ त्वरपरिगृहीता २–ऽपरिगृहीतागमना ३ ऽनङ्गक्रीडा ४ तीव्रकामाभिलाषा ५ इति ॥२६॥ क्षेत्रवास्तु १ हिरण्यसुवर्ण २ धनधान्य ३ दासीदास ४ कुप्यप्रमाणातिक्रमा ५ इति ॥ २७ ॥ ऊर्ध्वाधस्तिर्यग्व्यतिक्रम ३ क्षेत्रवृद्धि–४ स्मृत्यन्तर्धानानीति ५ ॥ २८॥ सचित्त १ संबद्ध २ तत्संमिश्रा ३ भिषव ४ दुष्पक्काहारा ५ इति ॥२९॥ कन्दर्प १ कौकुच्य २ मौखर्या ३ ऽसमीक्ष्याधिकरणो ४ पभोगाधिकत्वानीति ५ ॥३०॥ योगदुष्प्रणिधाना ३ नादर ४ स्मृत्यनुपस्थापनानीति ५ ॥३१॥ आनयन १ प्रेष्यप्रयोग २ शब्द ३–रूपानुपात ४ पुद्गलप्रक्षेपा ५ इति ॥ ३२ ॥ अप्रत्युपेक्षिताप्रमार्जितोत्सर्गा १ ऽऽदाननिक्षेप २ संस्तारोपक्रमणा ३ ऽनादर ४ स्मृत्यनुपस्थापनानीति ५ ॥ ३३ ॥ सचित्तनिक्षेप १ पिधान २ परव्यपदेश ३ मात्सर्य ४ कालातिक्रमा ५ इति ॥ ३४ ॥ एतद्रहिताणुव्रतादिपालनं विशेषतो गृहस्थधर्म इति ॥ ३५ ॥ क्लिष्टकर्मोदयादतिचारा इति ॥ ३६ ॥ विहितानुष्ठानवीर्यतस्तज्जय इति ॥ ३७ ॥ अत एव तस्मिन् यत्न इति ॥ ३८ ॥ सामान्यचर्याऽस्येति ॥ ३९ ॥ समानधार्मिकमध्ये वास इति ॥ ४० ॥ तथा–वात्सल्यमेतेष्विति ॥ ४१ ॥ तथा–धर्मचिन्तया स्वपनमिति ॥ ४२ ॥ तथा–नमस्कारेणावबोध इति ॥ ४३ ॥ तथा–प्रयत्नकृतावश्यकस्य विधिना चैत्यादिवन्दनमिति ॥ ४४ ॥ तथा–सम्यक्प्रत्याख्यानक्रियेति ॥ ४५ ॥ तथा–यथोचितं चैत्यगृहगमनमिति ॥ ४६ ॥ तथा–विधिनाऽनुप्रवेश इति ॥ ४७ ॥ तत्र–च उचितोपचारकरणमिति ॥ ४८ ॥ ततो–भावतः स्तवपाठ इति ॥ ४९ ॥ ततः–चैत्यसाधुवन्दनमिति ॥ ५० ॥ ततः–गुरु-

समीपे प्रत्याख्यानाभिव्यक्तिरिति ॥ ५१ ॥ ततो–जिनवचनश्रवणे नियोग इति ॥ ५२ ॥ ततः–सम्यक्
तत्पर्यालोचनमिति ॥ ५३ ॥ ततः–आगमैकपरतेति ॥ ५४ ॥ ततः–श्रुतशक्यपालनमिति ॥ ५५ ॥ तथा–
अशक्ये भावप्रतिबन्ध इति ॥ ५६ ॥ तथा–तत्कर्तृषु प्रशंसोपचाराविति ॥ ५७ ॥ तथा–निपुणभावचि
न्तनमिति ॥ ५८ ॥ तथा–गुरुसमीपे प्रश्न इति ॥ ५९ ॥ तथा–निर्णयावधारणमिति ॥ ६० ॥ तथा–ग्लाना
दिकार्याभियोग इति ॥ ६१ ॥ तथा–कृताकृतप्रत्युपेक्षेति ॥ ६२ ॥ ततश्च–उचितवेलयाऽऽगमनमिति ॥६३॥
ततो–धर्मप्रधानो व्यवहार इति ॥ ६४ ॥ तथा–द्रव्ये संतोषपर ( प्रधान ) तेति ॥ ६५ ॥ तथा–धर्मे धन
बुद्धिरिति ॥ ६६ ॥ तथा–शासनोन्नतिकरणमिति ॥ ६७ ॥ तथा–विभवोचित विधिना क्षेत्रदानमिति ॥६८॥
सत्कारादिविधिर्निःसङ्गता चेति ॥ ६९ ॥ वीतरागधर्मसाधव: क्षेत्रमिति ॥ ७० ॥ तथा–दुःखितेष्वनुकम्पा
यथाशक्ति द्रव्यतो भावतश्चेति ॥ ७१ ॥ तथा–लोकापवादभीरुतेति ॥ ७२ ॥ तथा–गुरुलाघवापेक्षण-
मिति ॥ ७३ ॥ बहुगुणे प्रवृत्तिरिति ॥ ७४ ॥ तथा–चैत्यातिथिपूजापुरःसर भोजनमिति ॥ ७५ ॥ तथा–
तदन्वेष प्रत्याख्यानक्रियेति ॥७६॥ तथा–शरीरस्थितौ प्रयत्न इति ॥७७॥ तथा तदुत्तरकार्यचिन्तेति ॥७८॥
तथा–कुशलभावनायां प्रबन्ध इति ॥ ७९ ॥ तथा–शिष्टचरितश्रवणमिति ॥ ८० ॥ तथा–सान्ध्यविधिपा
लनेति ॥ ८१ ॥ यथोचित तत्प्रतिपत्तिरिति ॥८२॥ पूजापुरस्सर चैत्यादिवन्दनमिति ॥ ८३ ॥ तथा–साधु
विश्रामणक्रियेति ॥ ८४ ॥ तथा–योगाभ्यास इति ॥ ८५ ॥ तथा–नमस्कारादिचिन्तनमिति ॥ ८६ ॥ तथा–

प्रशस्तभावक्रियेति ॥८७॥ तथा–भवस्थितिप्रेक्षणमिति ॥८८॥ तदनु तन्नैर्गुण्यभावनेति ॥८९॥ तथा–अपवर्गालोचनमिति ॥९०॥ तथा–श्रामण्यानुराग इति ॥९१॥ तथा–यथोचितं गुणवृद्धिरिति ॥९२॥ तथा–सत्त्वादिषु मैत्र्यादियोग इतीति ॥९३॥ विशेषतो गृहस्थस्य, धर्म उक्तो जिनोत्तमैः ॥ एवं सद्भावनासारः, परं चारित्रकारणम् ॥१४॥ पदंपदेन मेधावी, यथाऽऽरोहति पर्वतम् ॥ सम्यक् तथैव नियमा–द्धीरश्चारित्रपर्वतम् ॥१७॥ स्तोकान् गुणान् समाराध्य, बहूनामपि जायते ॥ यस्मादाराधनायोग्य–स्तस्मादादावयं मतः ॥१८॥ इति ॥

॥अथ चतुर्थोऽध्यायः॥ साम्प्रतं चतुर्थ आरभ्यते, तस्य चेदमादिसूत्रम् ॥ एवं विधिसमायुक्तः, सेवमानो गृहाश्रमम् ॥ चारित्रमोहनीयेन, मुच्यते पापकर्मणा ॥ १९ ॥ सदाज्ञाऽऽराधनायोगा–द्भावशुद्धेर्नियोगतः ॥ उपायसम्प्रवृत्तेश्च, सम्यक्चारित्ररागतः ॥ २० ॥ विशुद्धं सदनुष्ठानं, स्तोकमप्यर्हतां मतम् ॥ तत्त्वेन तेन च प्रत्या–ख्यानं ज्ञात्वा सुबह्वपि ॥२१॥ इति ॥ विशेषतो गृहस्थधर्म उक्तः, साम्प्रतं यतिधर्मावसर इति यतिमनुवर्णयिष्याम इति ॥१॥ अर्हः अर्हसमीपे विधिप्रव्रजितो यतिरिति ॥२॥ अथ प्रव्रज्यार्हः–आर्यदेशोत्पन्नः १ विशिष्टजातिकुलान्वितः २ क्षीणप्रायकर्ममलः ३ तत एव विमलबुद्धिः ४ "दुर्लभं मानुष्यं, जन्म मरणनिमित्तं, संपदश्चपलाः, विषया दुःखहेतवः, संयोगे वियोगः, प्रतिक्षणं मरणं, दारुणो विपाकः," इत्यवगतसंसारनैर्गुण्यः ५ तत एव तद्विरक्तः ६ प्रतनुकषायः ७ अल्पहास्यादिः ८ कृतज्ञः ९ विनीतः १० प्रागपि राजामात्यपौरजनबहुमतः ११ अद्रोहकारी १२ कल्याणाङ्गः १३ श्राद्धः १४ स्थिरः १५ समुपसम्पन्न १६ श्चेति ॥३॥

गुरुपदार्हस्तु इत्थम्भूत एव—विधिप्रतिपन्नप्रव्रज्यः १ समुपासितगुरुकुलः २ अस्खलितशीलः ३ सम्यगधीतागमः ४ तत एव विमलतरबोधात्तत्त्ववेदी ५ उपशान्तः ६ प्रवचनवत्सलः ७ सत्त्वहितरतः ८ आदेयः ९ अनुवर्तकः १० गम्भीरः ११ अविषादी १२ उपशमलब्ध्यादिसम्पन्नः १३ प्रवचनार्थवक्ता १४ स्वगुर्वनुज्ञातगुरुपदः १५ चेतीति ॥४॥ पादार्धगुणहीनौ मध्यमावराविति ॥५॥ नियम एवायमिति वायुरिति ( १ ) ॥६॥ समग्रगुणसाध्यस्य तदर्धभावेऽपि तत्सिद्ध्यसम्भवादिति ॥७॥ नैतदेवमिति वाल्मीकिरिति (२) ॥८॥ निर्गुणस्य कथञ्चित्तद्गुणभावोपपत्तेरिति ॥९॥ अकारणमेतदिति व्यास इति (३) ॥१०॥ गुणमात्रासिद्धौ गुणान्तरभाव(स्य) नियमा(द)भावादिति ॥ ११ ॥ नैतदेवमिति सम्राडिति (४) ॥ १२ ॥ सम्भवादेव श्रेयस्त्वसिद्धेरिति ॥१३॥ यत्किञ्चिदेतदिति नारद इति (५) ॥१४॥ गुणमात्राद् गुणान्तरभावेऽप्युत्कर्षायोगादिति ॥१५॥ सोऽप्येवमेव भवतीति वसुरिति (६) ॥१६॥ अयुक्तं कार्षापणधनस्य तदन्यविढपनेऽपि कोटिव्यवहारारोपणमिति क्षीरकदम्बक इति (७) ॥१७॥ न दोषो योग्यतायामिति विश्व इति (८) ॥१८॥ अन्यतरवैकल्येऽपि गुणबाहुल्यमेव सा तत्त्वत इति सुरगुरुरिति (९) ॥१९॥ सर्वमुपपन्नमिति सिद्धसेन इति (१०) ॥२०॥ भवन्ति त्वल्पा अपि असाधारणगुणाः कल्याणोत्कर्षसाधका इति ॥ २१ ॥ उपस्थितस्य प्रश्नाचारकथनपरीक्षादिर्विधिरिति ॥ २२ ॥ तथा—गुरुजनाद्यनुज्ञेति ॥ २३ ॥ तथा—तथोपधायोग इति ॥ २४ ॥ दुःस्वप्नादिकथनमिति ॥ २५ ॥ तथा—विपर्ययलिङ्गसेवेति ॥ २६ ॥ दैवज्ञैस्तथा तथा निवेदनमिति ॥ २७ ॥ न धर्मे मायेति ॥ २८ ॥

उभयहितमेतदिति ॥ २९ ॥ यथाशक्ति सौविहित्यापादनमिति ॥ ३० ॥ ग्लानौषधादिज्ञानात्त्याग इति ॥ ३१ ॥ तथा–गुरुनिवेदनमिति ॥ ३२ ॥ अनुग्रहधियाऽभ्युपगम इति ॥ ३३ ॥ तथा–निमित्तपरीक्षेति ॥ ३४ ॥ तथा–उचितकालापेक्षणमिति ॥ ३५ ॥ तथा–उपायतः कायपालनमिति ॥ ३६ ॥ तथा–भाववृद्धिकरणमिति ॥ ३७ ॥ तथा–अनन्तरानुष्ठानोपदेश इति ॥ ३८ ॥ तथा–शक्तितस्त्यागतपसी इति ॥ ३९ ॥ तथा–क्षेत्रादिशुद्धौ वन्दनादिशुद्ध्या शीलारोपणमिति ॥ ४० ॥ असङ्गतया समशत्रुमित्रता शीलमिति ॥ ४१ ॥ अतोऽनुष्ठानाद्यद्वा(तिभा) वसम्भव इति ॥ ४२ ॥ तथा–तपोयोगकारणं चेतीति ॥ ४३ ॥ एवं यः शुद्धयोगेन, परित्यज्य गृहाश्रमम् । संयमे रमते नित्यं, स यतिः परिकीर्तितः ॥ २२ ॥ एतत्तु सम्भवत्यस्य, सदुपायप्रवृत्तितः ॥ अनुपायात्तु साध्यस्य, सिद्धिं नेच्छन्ति पण्डिताः ॥ २३ ॥ यस्तु नैवंविधो मोहात्, चेष्टते शास्त्रबाधया । स तादृग्लिङ्गयुक्तोऽपि, न गृही न यतिर्मतः ॥ २४ ॥

॥अथ पञ्चमोऽध्यायः॥ वाहुभ्यां दुस्तरो यद्वत्, क्रूरनक्रो महोदधिः। यतित्वं दुष्करं तद्वत्, इत्याहुस्तत्त्ववेदिनः ॥२५॥ अपवर्गः फलं यस्य, जन्ममृत्यादिवर्जितः। परमानन्दरूपश्च, दुष्करं तत् न चाद्भुतम् ॥२६॥ भवस्वरूपविज्ञानात्, तद्विरागाच्च तत्त्वतः। अपवर्गानुरागाच्च, स्यादेतन्नान्यथा क्वचित् ॥ २७ ॥ इत्युक्तो यतिः, अधुनाऽस्य धर्ममनुवर्णयिष्यामः, यतिधर्मो द्विविधः सापेक्षयतिधर्मो निरपेक्षयतिधर्मश्चेति ॥१॥ तत्र सापेक्षयतिधर्म इति ॥ २ ॥ यथा–गुर्वन्तेवासितेति ॥ ३ ॥ तथा–तद्भक्तिबहुमानाविति ॥ ४ ॥ तथा–सदा-

ऽऽज्ञाकरणमिति ॥ ५ ॥ तथा-विधिना प्र रिति ॥ ६ ॥ तथा-आत्मानुग्रहचिन्तनमिति ॥ ७ ॥ तथा-
व्रतपरिणामरक्षेति ॥ ८ ॥ तथा-आरम्भत्याग इति ॥ ९ ॥ पृथिव्याद्यसंघट्टनमिति ॥ १० ॥ तथा-त्रिविधेर्या-
शुद्धिः ॥ ११ ॥ तथा-भिक्षाभोजनमिति ॥ १२ ॥ तथा-आघाताद्यदृष्टिरिति ॥ १३ ॥ तथा-तत्कथाऽश्रवण-
मिति ॥ १४ ॥ तथा-अरक्तद्विष्टतेति ॥ १५ ॥ तथा-ग्लानादिप्रतिपत्तिरिति ॥ १६ ॥ तथा-परोद्वेगाहेतु-
तेति ॥ १७ ॥ भावतः प्रयत्न इति ॥ १८ ॥ तथा-अशक्ये परिहार इति ॥ १९ ॥ तथा-अस्थानाभाषण-
मिति ॥ २० ॥ तथा-स्खलितप्रतिपत्तिरिति ॥ २१ ॥ तथा-पारुष्यपरित्याग इति ॥ २२ ॥ तथा-सर्वत्रापि-
शुनतेति ॥ २३ ॥ तथा-विकथावर्जनमिति ॥ २४ ॥ तथा-उपयोगप्रधानतेति ॥ २५ ॥ तथा-निश्चितहितो-
क्तिरिति ॥ २६ ॥ तथा-प्रतिपन्नानुपेक्षेति ॥ २७ ॥ तथा-असत्प्रलापाश्रुतिरिति ॥ २८ ॥ तथा-अभिनि-
वेशत्याग इति ॥ २९ ॥ तथा-अनुचिताग्रहणमिति ॥ ३० ॥ तथा-उचिते अनुज्ञापनेति ॥ ३१ ॥ तथा-
निमित्तोपयोग इति ॥ ३२ ॥ अयोग्येऽग्रहणमिति ॥ ३३ ॥ तथा-अन्ययोग्यस्य ग्रह इति ॥ ३४ ॥ गुरोर्नि-
वेदनमिति ॥ ३५ ॥ स्वयमदानमिति ॥ ३६ ॥ तदाशया प्रवृत्तिरिति ॥ ३७ ॥ उचितच्छन्दनमिति ॥ ३८ ॥
धर्मायोपभोग इति ॥ ३९ ॥ तथा-विविक्तवसतिसेवेति ॥ ४० ॥ तत्र-स्त्रीकथापरिहार इति ॥ ४१ ॥ निष-
द्यानुपवेशनमिति ॥४२॥ इन्द्रियाप्रयोग इति ॥४३॥ कुड्यान्तरस्थदाम्पत्यवर्जनमिति ॥४४॥ पूर्वक्रीडितास्मृ-
तिरिति ॥ ४५ ॥ प्रणीताभोजनमिति ॥ ४६ ॥ अतिमात्राभोग इति ॥ ४७ ॥ विभूषापरिवर्जनमिति ॥ ४८ ॥

तथा तत्त्वाभिनिवेश इति ॥ ४९ ॥ तथा युक्तोपधिधारणेति ॥ ५० ॥ तथा मूर्च्छात्याग इति ॥ ५१ ॥ तथा अप्रतिबद्धविहरणमिति ॥ ५२ ॥ तथा परकृतबिलवास इति ॥ ५३ ॥ तथा अवग्रहशुद्धिरिति ॥ ५४ ॥ मासादिकल्प इति ॥ ५५ ॥ एकत्रैव तत्क्रियेति ॥ ५६ ॥ तत्र च सर्वत्राममत्वमिति ॥ ५७ ॥ तथा निदानपरिहार इति ॥ ५८ ॥ विहितमिति प्रवृत्तिरिति ॥ ५९ ॥ तथा विधिना स्वाध्याययोग इति ॥ ६० ॥ तथा आवश्यकापरिहाणिरिति ॥ ६१ ॥ तथा यथाशक्ति तपःसेवनमिति ॥ ६२ ॥ तथा परानुग्रहक्रियेति ॥ ६३ ॥ तथा गुणदोषनिरूपणमिति ॥ ६४ ॥ तथा बहुगुणे प्रवृत्तिरिति ॥ ६५ ॥ तथा क्षान्तिमार्दवमार्जवमलोभतेति ॥ ६६ ॥ क्रोधाद्यनुदय इति ॥ ६७ ॥ तथा वैफल्यकरणमिति ॥ ६८ ॥ विपाकचिन्तेति ॥ ६९ ॥ तथा धर्मोत्तरो योग इति ॥ ७० ॥ तथा आत्मानुप्रेक्षेति ॥ ७१ ॥ उचितप्रतिपत्तिरिति ॥ ७२ ॥ तथा प्रतिपक्षासेवनमिति ॥ ७३ ॥ तथा आज्ञाऽनुस्मृतिरिति ॥ ७४ ॥ तथा समशत्रुमित्रतेति ॥ ७५ ॥ तथा परीषहजय इति ॥ ७६ ॥ तथा उपसर्गातिसहनमिति ॥ ७७ ॥ तथा सर्वथा भयत्याग इति ॥ ७८ ॥ तथा तुल्याश्मकाञ्चनतेति ॥ ७९ ॥ तथा अभिग्रहग्रहणमिति ॥ ८० ॥ तथा विधिवत्पालनमिति ॥ ८१ ॥ तथा यथाऽर्हं ध्यानयोग इति ॥ ८२ ॥ तथा अन्ते संलेखनेति ॥ ८३ ॥ संहननाद्यपेक्षणमिति ॥ ८४ ॥ भावसंलेखनायां यत्न इति ॥ ८५ ॥ ततो विशुद्धं ब्रह्मचर्यमिति ॥ ८६ ॥ विधिना देहत्याग इतीति ॥ ८७ ॥ निरपेक्षयतिधर्मस्त्वति ॥ ८८ ॥ वचनगुरुतेति ॥ ८९ ॥ तथा अल्पोपधित्वमिति ॥ ९० ॥ तथा निष्प्रतिकर्मशरीरतेति

॥ ९१ ॥ अपवादस्याग इति ॥ ९२ ॥ तथा ग्रामैकरात्रादिविधिविहरणमिति ॥ ९३ ॥ तथा नियतकालचारितेति ॥ ९४ ॥ तथा प्राय ऊर्ध्वस्थानमिति ॥ ९५ ॥ तथा देशनायामप्रबन्ध इति ॥ ९६ ॥ तथा सदाऽप्रमत्ततेति ॥ ९७ ॥ तथा ध्यानैकतानत्वमितीति ॥ ९८ ॥ सम्यग्यतित्वमाराध्य, महात्मानो यथोदितम् । सम्प्राप्नुवन्ति कल्याण-मिह लोके परत्र च ॥ २८ ॥ क्षीराश्रवादिलब्ध्योघ-मासाद्य परमाक्षयम् । कुर्वन्ति भव्यसत्त्वाना मुपकारमनुत्तमम् ॥ २९ ॥ मुच्यन्ते चाशु संसारा-दत्यन्तमसमञ्जसात् ॥ जन्ममृत्युजराव्याधि-रोगशोकाद्युपद्रुतात् ॥ ३० ॥ इति स्थविरकल्पिसाधुधर्मचर्यानिरपेक्षयतिधर्माचारनिरूपक पञ्चमोऽध्यायः ॥

॥ अथ षष्ठोऽध्यायः ॥ आशयानुचित उपायो-ऽनुष्ठानं सूरयो विदुः । साध्यसिद्ध्यङ्गमित्यस्माद्, यतिधर्मो द्विधा मतः ॥ ३१ ॥ समग्रा यत्र सामग्री, तदक्षेपेण सिद्ध्यति ॥ दवीयसाऽपि कालेन, वैकल्ये तु न जातुचित् ॥ ३२ ॥ तस्माद्यो यस्य योग्यः स्यात्, तत्तेनालोच्य सर्वथा । आरब्धव्यमुपायेन, सम्यगेष सतां नयः ॥३३॥ इत्युक्तो यतिधर्मः, इदानीमस्य विषयविभागमनुवर्णयिष्याम इति ॥१॥ तत्र कल्याणाशयस्य श्रुतरत्नमहोदधेः उपशमादिलब्धिमतः परहितोद्यतस्य अत्यन्तगम्भीरचेतसः प्रधानपरिणतेर्विधूतमोहस्य परमसत्त्वार्थकर्तुः सामायिकवतः विशुद्ध्यमानाशयस्य यथोचितप्रवृत्तेः सात्मीभूतशुभयोगस्य श्रेयान् सापेक्षयतिधर्म एवेति ॥ २ ॥ वचनप्रामाण्यादिति ॥ ३ ॥ सम्पूर्णदशपूर्वविदो निरपेक्षधर्मप्रतिपत्तिप्रतिषेधादिति ॥ ४ ॥ परार्थसम्पादनोपपत्तेरिति ॥ ५ ॥ तस्यैव च गुरुत्वादिति ॥ ६ ॥ सर्वथा दुःखमोक्ष

णादिति ॥ ७ ॥ तथा सन्तानप्रवृत्तेः ॥ ८ ॥ तथा योगत्रयस्याप्युदग्रफलभावादिति ॥ ९ ॥ तथा निरपेक्षध-
र्मोचितस्यापि तत्प्रतिपत्तिकाले परपरार्थसिद्धौ तदन्यसम्पादकाभावे प्रतिपत्तिप्रतिषेधाच्चेति ॥ १० ॥
नवादिपूर्वधरस्य तु यथोदितगुणस्यापि साधुशिष्यनिष्पत्तौ साध्यान्तराभावतः सति कायादिसामर्थ्ये
सद्वीर्याचारासेवनेन तथा प्रमादजयाय सम्यगुचितसमये आज्ञाप्रामाण्यतस्तथैव योगवृद्धेः प्रायोपवेशन-
वच्छ्रेयान्निरपेक्षयतिधर्म इति ॥ ११ ॥ तथा तत्कल्पस्य च परं परार्थलब्धिविकलस्येति ॥ १२ ॥ उचितानु-
ष्ठानं हि प्रधानं कर्मक्षयकारणमिति ॥ १३ ॥ उदग्रविवेकभावाद्रत्नत्रयाराधनादिति ॥ १४ ॥ अननुष्ठान-
मन्यदकामनिर्जराङ्गमुक्तविपर्ययादिति ॥ १५ ॥ निर्वाणफलमत्र तत्त्वतोऽनुष्ठानमिति ॥ १६ ॥ न चासद-
भिनिवेशवत्तदिति ॥ १७ ॥ अनुचितप्रतिपत्तौ नियमादसदभिनिवेशोऽन्यत्रानाभोगमात्रादिति ॥ १८ ॥
सरुभवति तद्वतोऽपि चारित्रमिति ॥ १९ ॥ अनभिनिवेशवांस्तु तद्युक्तः खल्वतत्त्वे ॥ २० ॥ स्वस्वभावो-
त्कर्षादिति ॥ २१ ॥ मार्गानुसारित्वादिति ॥ २२ ॥ तथारुचिस्वभावत्वादिति ॥ २३ ॥ श्रवणादौ प्रतिपत्ते-
रिति ॥ २४ ॥ असदाचारगर्हणादिति ॥ २५ ॥ इत्युचितानुष्ठानमेव सर्वत्र श्रेय इति ॥ २६ ॥ भावनासा-
रत्वात्तस्येति ॥ २७ ॥ इयमेव प्रधानं निःश्रेयसाङ्गमिति ॥ २८ ॥ एतत्स्थैर्याद्धि कुशलस्थैर्योपपत्तेरिति
॥ २९ ॥ भावनानुगतस्य ज्ञानस्य तत्त्वतो ज्ञानत्वादिति ॥ ३० ॥ न हि श्रुतमय्या प्रज्ञया भावनादृष्ट-
ज्ञातं ज्ञातं नामेति ॥ ३१ ॥ उपरागमात्रत्वादिति ॥ ३२ ॥ दृष्टापायवददृष्टापा(दृष्टवदपा)येभ्योऽनिवृत्ते-

रिति ॥ ३३ ॥ एतन्मूले च हिताहितयोः प्रवृत्तिनिवृत्ती इति ॥ ३४ ॥ अत एव भावनादृष्टज्ञानाद्विपर्ययायोग इति ॥ ३५ ॥ तद्वन्तो हि दृष्टापाययोगेऽप्यदृष्टापायेभ्यो निवर्तमाना दृश्यन्त एवान्यरक्षार्थमापितीति ॥ ३६ ॥ इति मुमुक्षोः सर्वत्र भावनायामेव यत्नः श्रेयानिति ॥ ३७ ॥ तद्भावे निसर्गत एव सर्वथा दोषोपरतिसिद्धेरिति ॥ ३८ ॥ यत्नोपयोगपूर्वा विहितप्रवृत्तिर्योनिरस्या इति ॥ ३९ ॥ महागुणत्वाद्वचनोपयोगस्येति ॥ ४० ॥ तत्र ह्यचिन्त्यचिन्तामणिकल्पस्य भगवतो बहुमानगर्भं स्मरणमिति ॥ ४१ ॥ भगवतैवमुक्तमित्याराधनायोगादिति ॥ ४२ ॥ एवं च प्रायो भगवत एव चेतसि समवस्थानमिति ॥ ४३ ॥ तदाऽऽराधनाय तद्भक्तिरेवेति ॥ ४४ ॥ उपदेशपालनैव भगवद्भक्तिः, नान्या, कृतकृत्यत्वादिति ॥ ४५ ॥ उचितद्रव्यस्तवस्यापि तद्रूपत्वादिति ॥ ४६ ॥ भावस्तवाङ्गतया विधानादिति ॥ ४७ ॥ इति स्थिते च भवति क्लिष्टकर्मविगम इति ॥ ४८ ॥ जलानलवदनयोर्विरोधादिति ॥ ४९ ॥ इत्युचितानुष्ठानमेव सर्वत्र प्रधानमिति ॥ ५० ॥ प्रायोऽतिचारासम्भवादिति ॥ ५१ ॥ यथाशक्ति प्रवृत्तेरिति ॥ ५२ ॥ सद्भावप्रतिबन्धादिति ॥ ५३ ॥ इतरथाऽऽर्तध्यानोपपत्तिरिति ॥ ५४ ॥ अकालौत्सुक्यस्य तत्त्वतस्तत्त्वादिति ॥ ५५ ॥ नैव प्रवृत्तिकालसाधनमिति ॥ ५६ ॥ इति सदोचितमिति ॥ ५७ ॥ तथा तदसत्त्वादिति ॥ ५८ ॥ प्रभूतान्येव तु प्रवृत्तिकालसाधनानीति ॥ ५९ ॥ निदानश्रवणादेरपि केषाञ्चित्प्रवृत्तिसमाध्यदर्शनादिति ॥ ६० ॥ तस्यापि तथापारम्पर्यसाधनत्वमिति ॥ ६१ ॥ यतिधर्माधिकारश्चायमिति प्रतिषेध इति ॥ ६२ ॥ न चैतत्

परिणते चारित्रपरिणाम इति ॥ ६३ ॥ तस्य प्रसन्नगम्भीरत्वादिति ॥ ६४ ॥ हितावहत्वादिति ॥ ६५ ॥ चारित्रा(त्रि)णां तत्साधनानुष्ठानविषयस्तूपदेशः, प्रतिपात्यसौ, कर्मवैचित्र्यादिति ॥ ६६ ॥ तत्संरक्षणानुष्ठानविषयश्च चक्रादिप्रवृत्त्यवसानभ्रमाधानज्ञातादिति ॥ ६७ ॥ माध्यस्थ्ये तद्वैफल्यमेवेति ॥ ६८ ॥ स्वयंभ्रमणासिद्धेरिति ॥ ६९ ॥ भावयतिर्हि तथा कुशलाशयत्वादशक्तोऽसमञ्जसप्रवृत्तावितरस्यामिवेतर इति ॥ ७० ॥ इति निदर्शनमात्रमिति ॥ ७१ ॥ न सर्वसाधर्म्ययोगेनेति ॥ ७२ ॥ यतेस्तदप्रवृत्तिनिमित्तस्य गरीयस्त्वादिति ॥ ७३ ॥ वस्तुतः स्वाभाविकत्वादिति ॥ ७४ ॥ तथा सद्भाववृद्धेः फलोत्कर्षसाधनादिति ॥ ७५ ॥ उपप्लवविगमेन तथावभासनादितीति ॥ ७६ ॥ एवंविधयतेः प्रायो, भावशुद्धेर्महात्मनः ॥ विनिवृत्ताग्रहस्योच्चै-र्मोक्षतुल्यो भवोऽपि हि ॥ ३४ ॥ सद्दर्शनादिसम्प्राप्तेः, सन्तोषामृतयोगतः ॥ भावैश्वर्यप्रधानत्वात्, तदासन्नत्वतस्तथा ॥ ३५ ॥ उक्तं मासादिपर्याय-वृद्ध्या द्वादशभिः परम् ॥ तेजः प्राप्नोति चारित्री, सर्वदेवेभ्य उत्तमम् ॥ ३६ ॥ इति षष्ठो यतिधर्मविधिनिरूपकोऽध्यायः ॥

॥ अथ सप्तमोऽध्यायः ॥ फलप्रधान आरम्भ, इति सल्लोकनीतितः ॥ सङ्क्षेपादुक्तमस्येदं, व्यासतः पुनरुच्यते ॥ ३७ ॥ प्रवृत्त्यङ्गमदः श्रेष्ठं, सत्त्वानां प्रायशश्च यत् ॥ आदौ सर्वत्र तद्युक्त-मभिधातुमिदं पुनः ॥ ३८ ॥ यथा ॥ विशिष्टं देवसौख्यं य-च्छिवसौख्यं च यत्परम् ॥ धर्मकल्पद्रुमस्येदं, फलमाहुर्मनीषिणः ॥ ३९ ॥ इत्युक्तो धर्मः ॥ साम्प्रतमस्य फलमनुवर्णयिष्यामः ॥ १ ॥ द्विविधं फलम्-अनन्तरपरम्पर-

भेदादिति ॥ २ ॥ तत्रानन्तरफलमुपप्लवह्रास इति ॥ ३ ॥ तथा भावैश्वर्यवृद्धिरिति ॥ ४ ॥ तथा जनप्रियत्वमिति ॥ ५ ॥ परम्परफलं तु सुगतिजन्मोत्तमस्थानपरम्परानिर्वाणावाप्तिरिति ॥ ६ ॥ सुगतिर्विशिष्टदेवस्थानमिति ॥ ७ ॥ तत्रोत्तमा रूपसम्पत्, सत्स्थितिप्रभावसुखद्युतिलेश्यायोगः, विशुद्धेन्द्रियावधित्वं, प्रकृष्टानि भोगसाधनानि, दिव्यो विमाननिवहः, मनोहराण्युद्यानानि, रम्या जलाशयाः, कान्ता अप्सरसः, अतिनिपुणाः किङ्कराः, प्रगल्भो नाट्यविधिः, चतुरोदारा भोगाः, सदा चित्ताह्लादः, अनेकसुखहेतुत्वं, कुशलानुबन्धः, महाकल्याणपूजाकरणं, तीर्थकरसेवा, सद्धर्मश्रुतौ रतिः, सदा सुखित्वमिति ॥ ८ ॥ तथा तच्च्युतावपि विशिष्टे देशे विशिष्ट एव काले स्फीते महाकुले निष्कलङ्केऽन्वयेन उदग्रे सदाचारेण आख्यायिकापुरुषयुक्ते अनेकमनोरथापूरकमत्यन्तनिरवद्यं जन्मेति ॥ ९ ॥ सुन्दरं रूपं, आलयो लक्षणानां, रहितमामयेन, युक्तं प्रज्ञया, सङ्गतं कलाकलापेन ॥ १० ॥ तथा गुणपक्षपातः १, असदाचारभीरुता २, कल्याणमित्रयोगः ३, सत्कथाश्रवणं ४, मार्गानुगो बोधः ५, सर्वोचितप्राप्तिः, हिताय सत्त्वसङ्गतस्य, परितोषकरी गुरूणां, संवर्द्धनी गुणान्तरस्य, निदर्शनं जनानां ६, अत्युदार आशयः ७, असाधारणा विषयाः, रहिता संक्लेशेन, अपरोपतापिनः, अमङ्गुलावसाना इति ८ ॥ ११ ॥ तथा काले धर्मप्रतिपत्तिरिति ॥ १२ ॥ तत्र च गुरुसहायसम्पदिति ॥ १३ ॥ ततश्च साधु संयमानुष्ठानमिति ॥ १४ ॥ ततोऽपि परिशुद्धाराधनेति ॥ १५ ॥ तत्र च विधिवच्छरीरत्याग इति ॥ १६ ॥ ततो

विशिष्टतरं देवस्थानमिति ॥ १७ ॥ ततः सर्वमेव शुभतरं तत्रेति ॥ १८ ॥ परं गतिशरीरादिहीनमिति ॥ १९ ॥ तथा रहितमौत्सुक्यदुःखेनेति ॥ २० ॥ अतिविशिष्टाह्लादादिमदिति ॥ २१ ॥ ततः तच्युतावपि विशिष्टदेश इत्यादि समानं पूर्वेणेति ॥ २२ ॥ विशिष्टतरं तु सर्वमिति ॥ २३ ॥ क्लिष्टकर्मविगमादिति ॥२४॥ शुभतरोदयादिति ॥२५॥ जीववीर्योल्लासादिति ॥२६॥ परिणतिवृद्धेरिति ॥२७॥ तत्तथास्वभावत्वादिति ॥२८॥ किञ्च प्रभूतोदाराण्यपि तस्य भोगसाधनानि, अयत्नोपनतत्वात्, प्रासङ्गिकत्वाद् अभिष्वङ्गाभावात्, कुत्सिताप्रवृत्तेः, शुभानुबन्धित्वादुदारसुखसाधनानि च ( न्येव ) बन्धहेतुत्वाभावेनेति ॥ २९ ॥ अशुभपरिणाम एव हि प्रधानं बन्धकारणं, तदङ्गतया तु बाह्यमिति ॥ ३० ॥ तदभावे बाह्यादल्पबन्धभावादिति ॥ ३१ ॥ वचनप्रामाण्यादिति ॥ ३२ ॥ बाह्योपमर्देऽप्यसंज्ञिषु तथाश्रुतेरिति ॥ ३३ ॥ एवं परिणाम एव शुभो मोक्षकारणमपीति ॥ ३४ ॥ तदभावे समग्रक्रियायोगेऽपि मोक्षासिद्धेरिति ॥ ३५ ॥ सर्वजीवानामेवानन्तशो ग्रैवेयकोपपातश्रवणादिति ॥ ३६ ॥ समग्रक्रियाऽभावे तदनवाप्तेरिति ॥ ३७ ॥ इत्यप्रमादसुखवृद्ध्या तत्काष्ठासिद्धौ निर्वाणावाप्तिरितीति ॥ ३८ ॥ यत्किञ्चन शुभं लोके, स्थानं तत्सर्वमेव हि ॥ अनुबन्धगुणोपेतं, धर्मादाप्नोति मानवः ॥ ४० ॥ धर्मश्चिन्तामणिः श्रेष्ठो, धर्मः कल्याणमुत्तमम् । हित एकान्ततो धर्मो, धर्म एवामृतं परम् ॥ ४१ ॥ चतुर्दशमहारत्न-सद्भोगान्नृष्वनुत्तमम् । चक्रवर्त्तिपदं प्रोक्तं, धर्महेलाविजृम्भितम् ॥ ४२ ॥ इति धर्मफलप्ररूपणनामा सप्तमोऽध्यायः ॥ ७ ॥

॥ अथाष्टमोऽध्यायः ॥ किञ्चेह बहुनोक्तेन, तीर्थकृत्त्वं जगद्धितम् ॥ परिशुद्धादवाप्नोति, धर्माभ्यासा दरोत्तमः ॥ ४३ ॥ नातः परं जगत्यस्मिन्, विद्यते स्थानमुत्तमम् ॥ तीर्थकृत्त्वं यथा सम्यक्, स्वपरार्थप्रसाधकम् ॥ ४४ ॥ पञ्चस्वपि महाकल्या-णेषु त्रैलोक्यशङ्करम् ॥ तथैव स्वार्थसंसिद्धिः(ध्या), परं निर्वाणकारणम् ॥ ४५ ॥ इत्युक्तप्रायं धर्मफलम्, इदानीं तच्छेपमेव उदग्रमनुवर्णयिष्यामः ॥१॥ तत्र [ सुख ] परम्परया प्रकृष्टभावशुद्धेः सामान्य परमजन्म तथा तीर्थकृत्त्वं चेति ॥ २ ॥ तत्राक्लिष्टमनुत्तरं विषयसौख्य, हीनभावविगमः उदग्रतरा सम्पत्, प्रभूतोपकारकरणं, आशयविशुद्धिः, धर्मप्रधानता, अवन्ध्यक्रियात्वमिति ॥ ३ ॥ तथा विशुद्ध्यमानाप्रतिपातिचरणावाप्तिः, तत्सात्म्यभावः, भव्यप्रमोदहेतुता, ध्यानसुखयोगः, अतिशयर्द्धिप्राप्तिरिति ॥ ४ ॥ अपूर्वकरणं, क्षपकश्रेणिः, मोहसागरोत्तारः, केवलाभिव्यक्तिः, परमसुखलाभ इति ॥ ५ ॥ सदारोग्याप्तेरिति ॥ ६ ॥ भावसन्निपातक्षयादिति ॥ ७ ॥ रागद्वेषमोहा हि दोषाः, तथा तथाऽऽत्मदूषणादिति ॥ ८ ॥ अविषयेऽभिष्वङ्गकरणाद्राग इति ॥ ९ ॥ तत्रैवाग्निज्वालाकल्पमात्सर्यापादनाद् द्वेष इति ॥ १० ॥ हेयेतरभावाधिगमप्रतिबन्धविधानान्मोह इति ॥ ११ ॥ सत्स्वेतेषु न यथावस्थितं सुखं, स्वधातुवैषम्यादिति ॥ १२ ॥ क्षीणेषु न दुःखं, निमित्ताभावादिति ॥ १३ ॥ आत्यन्तिकभावरोगविगमात् परमेश्वरताऽऽप्तेस्तत्तथास्वभावत्वात् परमसुखभाव इतीति ॥ १४ ॥ देवेन्द्रहर्षजननमिति ॥ १५ ॥ तथा पूजानुग्रहाङ्गतेति ॥ १६ ॥ तथा भक्तिकार्योपयोग इति ॥ १७ ॥ ततः परं परार्थ

करणमिति ॥ १८ ॥ अविच्छेदेन भूयसां मोहान्धकारापनयनं हृद्यैर्वचनभानुभिरिति ॥ १९ ॥ सूक्ष्मभाव-प्रतिपत्तिरिति ॥ २० ॥ ततः श्रद्धामृतास्वादनमिति ॥ २१ ॥ ततः सदनुष्ठानयोग इति ॥ २२ ॥ ततः पर-मापायहानिरिति ॥ २३ ॥ सानुबन्धसुखभाव उत्तरोत्तरः प्रकामप्रभूतसत्त्वोपकाराय अवन्ध्यकारणं निर्वृतेरिति ॥ २४ ॥ इति परं परार्थकरणमिति ॥ २५ ॥ भवोपग्राहिकर्मविगम इति ॥ २६ ॥ ततः निर्वाण-गमनमिति ॥ २७ ॥ तत्र च पुनर्जन्माद्यभाव इति ॥ २८ ॥ बीजाभावतोऽयमिति ॥ २९ ॥ कर्मविपाक-स्तदिति ॥ ३० ॥ अकर्मा चासाविति ॥ ३१ ॥ तद्धत एव तद्ग्रह इति ॥ ३२ ॥ तदनादित्वेन तथाभावसिद्धे-रिति ॥ ३३ ॥ सर्वविप्रमुक्तस्य तु तथास्वभावत्वान्निष्ठितार्थत्वान्न तद्ग्रहणे निमित्तमिति ॥ ३४॥ नाजन्मनो जरेति ॥ ३५ ॥ एवं च न मरणभयशक्तिरिति ॥ ३६ ॥ तथा न चान्य उपद्रव इति ॥ ३७ ॥ विशुद्धस्व-रूपलाभ इति ॥ ३८ ॥ तथा आत्यन्तिकी व्याबाधानिवृत्तिरिति ॥ ३९ ॥ सा निरुपमं सुखमिति ॥ ४० ॥ सर्वत्राप्रवृत्तेरिति ॥ ४१ ॥ समाप्तकार्यत्वादिति ॥ ४२ ॥ न चैतस्य क्वचिदौत्सुक्यमिति ॥ ४३॥ दुःखं चैतत् स्वास्थ्यविनाशनेनेति ॥ ४४ ॥ दुःखशक्त्युद्रेकतोऽस्वास्थ्यसिद्धेरिति ॥ ४५ ॥ अहितप्रवृत्त्येति ॥ ४६ ॥ स्वास्थ्यं तु निरुत्सुकतया प्रवृत्तेरिति ॥ ४७ ॥ परमस्वास्थ्यहेतुत्वात् परमार्थतः स्वास्थ्यमेवेति ॥ ४८ ॥ भावसारे हि प्रवृत्त्यप्रवृत्ती सर्वत्र प्रधानो व्यवहार इति ॥ ४९ ॥ प्रतीतिसिद्धश्चायं सद्योगसचेतसामिति ॥ ५० ॥ सुस्वास्थ्यं च परमानन्द इति ॥ ५१ ॥ तदन्यनिरपेक्षत्वादिति ॥ ५२॥ अपेक्षाया दुःखरूपत्वा-

विति ॥ ५३ ॥ अर्थान्तरप्राप्त्या हि तन्निवृत्तिर्दुःखत्वेनानिवृत्तिरेवेति ॥ ५४ ॥ न चास्यार्थान्तरावाप्तिरिति ॥ ५५ ॥ स्वस्वभावनियतो ह्यसौ विनिवृत्तेच्छाप्रपञ्च इति ॥ ५६ ॥ अतोऽकामत्वात्तत्स्वभावत्वात्स लोकान्ताक्षेत्रावाप्तिरिति ॥ ५७ ॥ औत्सुक्यवृद्धिर्हि लक्षणमस्याः, हानिश्च समयान्तरे इति ॥ ५८ ॥ न चैतदस्य भगवतः, आकालं तथावस्थितेरिति ॥ ५९ ॥ कर्मक्षयाविशेषादिति ॥ ६० ॥ इति निरुपमसुखसिद्धिरिति ॥ ६१ ॥ सद्ध्यानवह्निना जीवो, दग्ध्वा कर्मेन्धनं भुवि ॥ सद्ब्रह्मादिपदैर्गीतं, स याति परमं पदम् ॥ ४६ ॥ पूर्वावेधवशादेव, तत्स्वभावत्वतस्तथा ॥ अनन्तवीर्ययुक्तत्वात्, समयेनानुगुण्यतः ॥ ४७ ॥ स तत्र दुःखविरहा—दत्यन्तसुखसङ्गतः ॥ तिष्ठत्ययोगो योगीन्द्र—वन्द्यस्त्रिजगतीश्वरः ॥ ४८ ॥ इत्यष्टमोऽध्यायः ॥

प्रथमाध्याये सूत्राणि ५८ ॥ द्वितीयाध्याये सू० ७५ ॥ तृतीयाध्याये सू० ९३ ॥ चतुर्थाध्याये सू० ४२ ॥ पञ्चमाध्याये सू० १८ ॥ षष्ठाध्याये सू० ७३ ॥ सप्तमाध्याये सू० ३८ ॥ अष्टमाध्याये सू० ६१ ॥ प्रत्यध्यायमादावन्ते च त्रयस्त्रयः श्लोका इति पद् श्लोकाः सर्वसूत्राणि ५४२ ॥ श्लोकाः ४८ ॥

॥ इतिश्रीमद्धरिभद्रसूरिप्रणीतं अष्टाध्यायीमयं श्रीधर्मबिन्दुप्रकरणम् ॥

सुविहितशिरोमणि सूरिपुरन्दर–पूर्वधरनिकटकालवर्ति–सुगृहीतनामधेय भगवच्छ्रीमद्धरिभद्रसूरिपुङ्गवप्रणीतं योगदृष्टिसमुच्चय–योगबिन्दु–षोडशक–शास्त्रवार्तासमुच्चयादिसंस्कृतवाङ्मयंग्रन्थरत्नाष्टकम् संपूर्णम् ॥

## धर्मबिन्दुप्रकरणटीकाकृता भगवता श्रीमुनिचन्द्रसूरीश्वरेण साक्षितयोद्धृतानि नानाशास्त्रपद्यानि ॥

पात्रे दीनादिवर्गे च, दानं विधिवदिष्यते ॥ पोष्यवर्गाविरोधेन, न विरुद्धं स्वतश्च यत् ॥ १ ॥ पापेनैवार्थरागान्धः, फलमाप्नोति यत्क्वचित् ॥ बडिशामिषवत्तत्-मविनाश्य न जीर्यति ॥ २ ॥ निपानमिव मण्डूकाः, सरः पूर्ण मिवाण्डजाः ॥ शुभकर्माणमायान्ति, विवशाः सर्वसम्पदः ॥ ३ ॥ राजदण्डभयात्पापं, नाचरत्यधमो जनः ॥ परलोकभयान्मध्यः, स्वभावादेव चोत्तमः ॥ ४ ॥ शुद्धाः प्रसिद्धिमायान्ति, लघवोऽपीह नेतरे ॥ तमस्यपि विलोक्यन्ते, दन्तिदन्ता, न दन्तिनः ॥ ५ ॥ गुणवानितिप्रसिद्धिः, संनिहितैरेव भवति गुणवद्भिः ॥ ख्यातो मधुर्जगत्यपि, सुमनोभिः सुरभिभिः सुरभिः ॥ ६ ॥ श्रीर्मङ्गलात्प्रभवति, प्रागल्भ्याच्च प्रवर्द्धते ॥ दाक्ष्यात्तु कुरुते मूलं, संयमात्प्रतितिष्ठति ॥ ७ ॥ आयव्ययमनालोच्य, यस्तु वैश्रवणायते ॥ अचिरेणैव कालेन, सोऽत्र वै श्रवणायते ॥ ८ ॥ यद्यपि सकलां योगी, छिद्रां पश्यति मेदिनीम् ॥ तथापि लौकिकाचारं, मनसाऽपि न लङ्घयेत् ॥ ९ ॥ न कुलं वृत्तहीनस्य, प्रमाणमिति मे मतिः ॥ अन्त्येष्वपि हि जातानां, वृत्तमेव विशिष्यते ॥ १० ॥ न परपरिवादादन्यद्, विद्वेषणे परं भैषजमस्ति ॥ राजादिषु तु वित्तप्राण-नाशादिरपि दोषः स्यादिति ॥ ११ ॥ यदि सत्सङ्गनिरतो, भविष्यसि भविष्यसि ॥ अथासज्जनगोष्ठीषु, पतिष्यसि पतिष्यसि ॥ १२ ॥ अभ्युत्थानादियोगश्च, तदन्ते निभृतासनम् ॥ नामग्रहश्च नाऽस्थाने, नावर्णश्रवणं क्वचित् ॥ १३ ॥ वृद्धौ च मातापितरौ, सतीं भार्यां सुतान् शिशून ॥ अप्य-

कर्मवशात कृत्वा, भर्तारपान् मनुरब्रवीत् ॥ १४ ॥ चत्वारि ते तात गृहे वसन्तु, श्रियाभिजुष्टस्य गृहस्थधर्मे ॥
सख्या दरिद्रो भगिनी ह्यपत्या, ज्ञातिश्च वृद्धो विधनः कुलीन ॥ १५ ॥ तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन
महात्मना ॥ अतिथिं त विजानीया-च्छेषमभ्यागतं विदुः ॥ १६ ॥ औचित्यमेकमेकत्र, गुणानां राशि
रेकतः ॥ विषायते गुणग्राम, औचित्यपरिवर्जितः ॥ १७ ॥ पानाहारादयो यस्या-विरुद्धाः प्रकृतेरपि ॥
सुखित्वायावलोक्यन्ते, तत्सात्म्यमिति गीयते ॥ १८ ॥ लोकः खल्वाधारः, सर्वेषां धर्मचारिणां यस्मात् ॥
तस्माल्लोकविरुद्धं, धर्मविरुद्धं च सन्त्याज्यम् ॥ १९ ॥ अतिपरिचयादवज्ञा, भवति विशिष्टेऽपि वस्तुनि
प्रायः ॥ लोकः प्रयागवासी, कूपे स्नानं सदा कुरुते ॥ २० ॥ उपदेशः शुभो नित्यं, दर्शनं धर्मचारिणाम् ॥
स्थाने विनय इत्येतत्साधुसेवाफलं महत् ॥ २१ ॥ धर्मश्चेन्नावसीदेत, कपालेनापि जीवितः ॥ आढ्योऽस्मी-
त्यवगन्तव्य, धर्मवित्ता हि साधवः ॥ २२ ॥ कः कालः कानि मित्राणि, को देशः कौ व्ययागमौ ॥ कश्चाहं
का च मे शक्ति-रिति चिन्त्यं मुहुर्मुहुः ॥ २३ ॥ यः काकिणीमप्यपथप्रपन्ना-मन्वेषते निष्कसहस्रतुल्याम् ॥
कालेन कोटिष्वपि मुक्तहस्त-स्तस्यानुबन्धं न जहाति लक्ष्मीः ॥ २४ ॥ कान्तमपोज्झति खेद, तस निर्वाति
पुष्पत भूयम् ॥ स्थिरतामेति व्याकुल-मुपयुक्तसुभाषितं चेतः ॥२५॥ दर्पः श्रमयति नीचान्, निष्फलनय-
विगुणदुष्करारम्भैः ॥ स्रोतोविलोमतरण-व्यसनिभिरायास्यते मत्स्यैः ॥२६॥ जीवन्ति शतशः प्राणाः, प्रज्ञया
वित्तसंक्षये ॥ नहि प्रज्ञाक्षये कश्चित्, वित्ते सत्यपि जीवति ॥२७॥ कुत्सितेषु दयात्यन्त-मद्वेषो गुणवत्सु च ॥

तच्चिन्ताद्यङ्कुरादि
औचित्यासेवनं चैव, सर्वत्रैवाविशेषतः ॥ २८ ॥ वपनं धर्मबीजस्य, सत्प्रशंसादि तद्गतम् ॥ तच्चिन्ताद्यङ्कुरादि
स्यात्, फलसिद्धिस्तु निर्वृतिः ॥ २९ ॥ चिन्तासच्छ्रुत्यनुष्ठान–देवमानुषसम्पदः ॥ क्रमेणाङ्कुरसत्काण्ड–
नालपुष्पसमा मताः ॥ ३० ॥ प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः ॥ प्रियं कृत्वा मौनं–सदसि कथनं
चाप्युपकृतेः ॥ अनुत्सेको लक्ष्म्या निरभिभवसाराः परकथाः ॥ श्रुते चासन्तोषः कथमनभिजाते निव-
सति ॥ ३१ ॥ पञ्चैतानि पवित्राणि, सर्वेषां धर्मचारिणाम् ॥ अहिंसा सत्यमस्तेयं, त्यागो मैथुनवर्जनम्
॥ ३२ ॥ बालस्त्रीमूढमूर्खाणां, नृणां चारित्रकांक्षिणाम् ॥ अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः स्मृतः
॥ ३३ ॥ न मिथ्यात्वसमः शत्रु–र्न मिथ्यात्वसमं विषम् ॥ न मिथ्यात्वसमो रोगो, न मिथ्यात्वसमं तमः
॥ ३४ ॥ यत्र प्रयान्ति पुरुषाः, स्वर्गं यच्च प्रयान्ति विनिपातम् ॥ तत्र निमित्तमनार्यः, प्रमाद इति निश्चि-
तमिदं मे ॥ ३५ ॥ तैः कर्मभिः स जीवो, विवशः संसारचक्रमुपयाति ॥ द्रव्यक्षेत्राऽद्धाभाव–भिन्नमावर्तते
बहुशः ॥ ३६ ॥ अमित्रं कुरुते मित्रं, मित्रं द्वेष्टि हिनस्ति च ॥ कर्म चारभते दुष्टं, तमाहुर्मूढचेतसम्
॥ ३७ ॥ चक्षुष्मन्तस्त एवेह, ये श्रुतज्ञानचक्षुषा ॥ सम्यक् सदैव पश्यन्ति, भावान् हेयेतरान्नराः ॥ ३८ ॥
चित्तमेव हि संसारो, रागादिक्लेशवासितम् ॥ तदेव तैर्विनिर्मुक्तं, भवान्त इति कथ्यते ॥ ३९ ॥ परिणामो
ह्यर्थान्तर–गमनं, न च सर्वथा व्यवस्थानम् ॥ न च सर्वथा विनाशः, परिणामस्तद्विदामिष्टः ॥४०॥ तत्पर्या-
यविनाशो, दुःखोत्पादस्तथा च सङ्क्लेशः ॥ एष वधो जिनभणितो, वर्जयितव्यः प्रयत्नेन ॥ ४१ ॥ भाव-

यितव्यमनित्य-त्वमशरणत्वं तथैकतान्यत्वे । अशुचित्वं संसारः, कर्माश्रवसंवरविधिश्च ॥ ४२ ॥ निर्जर-
णलोकविस्तर-धर्मस्वाख्याततत्त्वचिन्ताश्च ॥ बोधेः सुदुर्लभत्वं, च भावना द्वादश विशुद्धाः ॥ ४३ ॥ सत्ये
धर्मे दयासहिंसाप्रबन्धे, देवे रागद्वेषमोहादिमुक्ते ॥ साधौ सर्वग्रन्थसन्दर्भहीने, संवेगोऽसौ निश्चलो योऽनु
रागः ॥ ४४ ॥ सस्यानीवोपरे क्षेत्रे, निक्षिप्तानि कदाचन ॥ न प्रसानि प्ररोहन्ति, जीवे मिथ्यात्ववासिते
॥ ४५ ॥ संयमा नियमाः सर्वे, नाश्यन्तेऽनेन पावनाः ॥ क्षयकालानलेनेव, पादपाः फलशालिनः ॥ ४६ ॥
खीणो निव्वावहुआ-सणो व्व, छारापिहिय व्व उवसंतो ॥ दरविज्झायविहाडिय-जलणोवम्मो खओ
वसमो ॥ ४७ ॥ श्रममविचिन्त्यात्मगतं, तस्माच्छ्रेयः सदोपदेष्टव्यम् ॥ आत्मानं च परं च हि, हितो
पदेष्टानुगृह्णाति ॥ ४८ ॥ अपावृत्तस्य दोषेभ्यः, सम्यग्वासो गुणैः सह ॥ उपवासः स विज्ञेयो न शरीर
विशोषणम् ॥ ४९ ॥ न मारयामीतिकृतव्रतस्य, विनैव मृत्युं क इहातिचारः ॥ निगद्यते यः कुपितो वधा
दीन्, करोत्यसौ स्यान्नियमानपेक्षः ॥ ५० ॥ मृत्योरभावान्नियमोऽस्ति तस्य, कोपाद्दयाहीनतया तु भग्नः ॥
देशस्य भङ्गादनुपालनाच्च, पूज्या अतीचारमुदाहरन्ति ॥ ५१ ॥ परदारवज्जिणो पंच, होन्ति तिन्नि उ सदा
रसंतुट्ठे ॥ इत्थीए तिन्नि पंच व, भंगविगप्पेहिं नायव्वा ॥ ५२ ॥ तम्हा निव्वसईए, बहुमाणेणं च अहि
गयगुणम्मि ॥ पडिवक्खदुगुंछाए-परिणइआलोयणेण य ॥ ५३ ॥ तित्थंकरभत्तीए, सुसाहुजणपज्जुवास
णाए य ॥ उत्तरगुणसद्धाए, एत्थ सया होइ जइयव्वं ॥ ५४ ॥ एवमसन्तोऽवि इमो, जायइ जाओ य ण

पडइ कयावि ॥ ता एत्थं बुद्धिमया, अपमाओ होइ कायव्वो ॥ ५५ ॥ यद्यपि निर्गतभाव-स्तथाप्यसौ रक्ष्यते परैः सद्भिः ॥ वेणुर्विलूनमूलोऽपि, वंशगहने महीं नैति ॥ ५६ ॥ जिनशासनस्य सारो, जीवदया निग्रहः कषायाणाम् ॥ साधार्मिकवात्सल्यं, भक्तिश्च तथा जिनेन्द्राणाम् ॥ ५७ ॥ धन्यास्ते वन्दनीयास्ते, तैस्त्रैलोक्यं पवित्रितम् ॥ यैरेष भुवनक्लेशी, काममल्लो विनिर्जितः ॥ ५८ ॥ एष पञ्च नमस्कारः, सर्वपाप-प्रणाशनः ॥ मङ्गलानां च सर्वेषां, प्रथमं भवति मङ्गलम् ॥ ५९ ॥ चैत्यवन्दनतः सम्यक्, शुभो भावः प्रजायते ॥ तस्मात्कर्मक्षयः सर्वः, ततः कल्याणमश्नुते ॥ ६० ॥ परिमितमुपभुञ्जानो, ह्यपरिमितमनन्तकं परिहरंश्च ॥ प्राप्नोति च परलोके, ह्यपरिमितमनन्तकं सौख्यम् ॥ ६१ ॥ नार्या यथान्यसक्ताया-स्तत्र भावे सदा स्थिते ॥ तद्योगः पापबन्धाय, तथा धर्मेऽपि दृश्यताम् ॥ ६२ ॥ अनादिनिधने द्रव्ये, स्वपर्यायाः प्रति-क्षणम् ॥ उन्मज्जन्ति निमज्जन्ति, जलकल्लोलवज्जले ॥ ६३ ॥ स्नेहाभ्यक्तशरीर-स्य, रेणुना श्लिष्यते यथा गात्रम् ॥ रागद्वेषक्लिन्नस्य, कर्मबन्धो भवत्येवम् ॥ ६४ ॥ सन्तोषामृततृप्तानां, यत्सुखं शान्तचेतसाम् ॥ कुतस्तद्धनलुब्धाना-मितश्चेतश्च धावताम् ॥ ६५ ॥ क्षान्तो दान्तो मुक्तो, जितेन्द्रियः सत्यवागभयदाता ॥ प्रोक्तस्त्रिदण्डविरतो, विधिगृहीता भवति पात्रम् ॥ ६६ ॥ अन्योपकारकरणं, धर्माय महीयसे च भव-तीति ॥ अधिगतपरमार्थाना-मविवादो वादिनामत्र ॥ ६७ ॥ वचनीयमेव मरणं, भवति कुलीनस्य लोक-मध्येऽस्मिन् ॥ मरणन्तु कालपरिणति-रियं च जगतोऽपि सामान्या ॥ ६८ ॥ अप्पेण बहुमेसेज्जा, एयं

यितव्यमनित्य-त्वमशरणत्वं तथैकतान्यत्वे ॥ अशुचित्वं संसारः, कर्माश्रवसंवरविधिश्च ॥ ४२ ॥ निर्जर-णलोकविस्तर-धर्मस्वाख्याततत्त्वचिन्ताश्च ॥ बोधेः सुदुर्लभत्वं, च भावना द्वादश विशुद्धाः ॥ ४३ ॥ सत्ये धर्मे त्वस्तहिंसाप्रपन्चे, देवे रागद्वेषमोहादिमुक्ते ॥ साधौ सर्वग्रन्थसन्दर्भहीने, संवेगोऽसौ निश्चलो योऽनु रागः ॥ ४४ ॥ सस्यानीवोपरे क्षेत्रे, निक्षिप्तानि कदाचन ॥ न व्रतानि प्ररोहन्ति, जीवे मिथ्यात्ववासिते ॥ ४५ ॥ संयमा नियमाः सर्वे, नाश्यन्तेऽनेन पावनाः ॥ क्षमकालानलेनेव, पादपाः फलशालिनः ॥ ४६ ॥ खीणो निव्वाघहुआ-सणो व्व, छारापिहिय व्व उवसंतो ॥ दरविज्झायविहाडिय-जलणोवम्मो ख्रओ वसमो ॥ ४७ ॥ ममत्वविचिन्त्यात्मगतं, तस्माच्छ्रेयः सदोपदेष्टव्यम् ॥ आत्मानं च परं च हि, हितो पदेष्टानुगृह्णाति ॥ ४८ ॥ अपावृत्तस्य दोषेभ्यः, सम्यग्वासो गुणैः सह ॥ उपवासः स विज्ञेयो न शरीर विशोषणम् ॥ ४९ ॥ न मारयामीतिकृतव्रतस्य, विनैव मृत्यु क इहातिचारः ॥ निगद्यते यः कुपितो वधा दीन्, करोत्यसौ स्यान्नियमानपेक्षः ॥ ५० ॥ मृत्योरभावान्नियमोऽस्ति तस्य, कोपाद्दयाहीनतया तु भग्नः ॥ देशस्य भङ्गादनुपालनाच, पूज्या अतीचारमुदाहरन्ति ॥ ५१ ॥ परदारवज्जिणो पंच, होन्ति तिन्नि उ सदा रसंतुट्ठे ॥ इत्थीए तिन्नि पंच य, भंगविगप्पेहिं नायव्वा ॥ ५२ ॥ तरुहा निवसईए, पहुमाणेणं च अहि गयगुणम्मि ॥ पविस्सगमुट्ठाए-परिणइआलोयणेण य ॥ ५३ ॥ तित्थकरभत्तीए, सुसाहुजणपज्जुवास णाए य ॥ उत्तरगुणसद्धाए, एत्थ सया होइ जइयव्वं ॥ ५४ ॥ एवमसन्तोऽवि इमो, जायइ जाओ य ण

पडइ कयावि ॥ ता एत्थं बुद्धिमया, अपमाओ होइ कायव्वो ॥ ५५ ॥ यद्यपि निर्गतभाव-स्तथाप्यसौ रक्ष्यते परैः सद्भिः ॥ वेणुर्विलूनमूलोऽपि, वंशगहने मही नैति ॥ ५६ ॥ जिनशासनस्य सारो, जीवदया निग्रहः कषायाणाम् ॥ साधार्मिकवात्सल्यं, भक्तिश्च तथा जिनेन्द्राणाम् ॥ ५७ ॥ धन्यास्ते वन्दनीयास्ते, तैस्त्रैलोक्यं पवित्रितम् ॥ यैरेष भुवनक्लेशी, काममल्लो विनिर्जितः ॥ ५८ ॥ एष पञ्च नमस्कारः, सर्वपाप-प्रणाशनः ॥ मङ्गलानां च सर्वेषां, प्रथमं भवति मङ्गलम् ॥ ५९ ॥ चैत्यवन्दनतः सम्यक्, शुभो भावः प्रजायते ॥ तस्मात्कर्मक्षयः सर्वः, ततः कल्याणमश्नुते ॥ ६० ॥ परिमितमुपभुञ्जानो, ह्यपरिमितमनन्तकं परिहरंश्च ॥ प्राप्नोति च परलोके, ह्यपरिमितमनन्तकं सौख्यम् ॥ ६१ ॥ नार्या यथान्यसक्ताया-स्तत्र भावे सदा स्थिते ॥ तद्योगः पापबन्धाय, तथा धर्मेऽपि दृश्यताम् ॥ ६२ ॥ अनादिनिधने द्रव्ये, स्वपर्यायाः प्रति-क्षणम् ॥ उन्मज्जन्ति निमज्जन्ति, जलकल्लोलवज्जले ॥ ६३ ॥ स्नेहाभ्यक्तशरीर-स्य, रेणुना श्लिष्यते यथा गात्रम् ॥ रागद्वेषक्लिन्नस्य, कर्मबन्धो भवत्येवम् ॥ ६४ ॥ सन्तोषामृततृप्तानां, यत्सुखं शान्तचेतसाम् ॥ कुतस्तद्धनलुब्धाना-मितश्चेतश्च धावताम् ॥ ६५ ॥ क्षान्तो दान्तो मुक्तो, जितेन्द्रियः सत्यवागभयदाता ॥ प्रोक्तस्त्रिदण्डविरतो, विधिगृहीता भवति पात्रम् ॥ ६६ ॥ अन्योपकारकरणं, धर्माय महीयसे च भव-तीति ॥ अधिगतपरमार्थाना-मविवादो वादिनामत्र ॥ ६७ ॥ वचनीयमेव मरणं, भवति कुलीनस्य लोक-मध्येऽस्मिन् ॥ मरणन्तु कालपरिणति-रियं च जगतोऽपि सामान्या ॥ ६८ ॥ अप्पेण बहुमेसेज्जा, एयं

परिपलक्ष्मणम् ॥ सव्वासु परिसेवा , एव अद्धपय चिक ॥ ६९ ॥ जिणपूमोचियदाण, परियणसंभालणा
उचियकिच ॥ ठाणुववेसो य तहा, पचक्खाणस्स संभरणम् ॥ ७० ॥ धर्मार्थकाममोक्षाणां, शरीर कारण
यतः ॥ ततो यत्नेन तद्रक्ष्य, यथोक्तैरनुवर्त्तनैः ॥ ७१ ॥ सर्वेऽपि सन्तु सुखिनः, सर्वे सन्तु निरामयाः ॥
सर्वे भद्राणि पश्यन्तु, मा कश्चित्पापमाचरेत् ॥ ७२ ॥ सालम्बनो निराल-म्बनश्च योगः परो द्विधा ज्ञेयः ॥
जिनरूपध्यान स-त्वाद्यस्तत्त्वगतस्त्वपरः ॥ ७३ ॥ चिंतारत्नमसंक्लिष्टमान्तर धनमुच्यते ॥ यस्य
तन्मुषित दोषै-स्तस्य शिष्टा विपत्तयः ॥ ७४ ॥ यौवन नगनदीस्पदोपम, शारदाम्बुदविलासि जीवितम् ॥
स्वप्नलब्धधनविभ्रम धन, स्थावरं किमपि नास्ति तत्त्वतः ॥ ७५ ॥ विग्रहाः गदभुजङ्गमालयाः, संगमा
विगमदोषदूषिताः ॥ संपदोऽपि विपदा कटाक्षिता, नास्ति किञ्चिदनुपद्रव सुखम् ॥ ७६ ॥ इतः क्रोधे
गृध्र प्रकटयति पक्षं निभ्रमितः ॥ शृगाली तृष्णेव विवृतवदना धावति पुरः ॥ इतः क्रूर कामो
विचरति पिशाचश्चिरमहो ॥ श्मशान संसारः क इह पतितः स्थास्यति सुखम् ॥ ७७ ॥ एतास्तावदसंशय
कुशदलप्रान्तोदबिन्दूपमाः ॥ लक्ष्म्यो बन्धुसमागमोऽपि न चिरस्थायी खलप्रीतिवत् ॥ यच्चान्यत्किल
किञ्चिदस्ति निखिल तरुणारदाम्भोधर-च्छायाचञ्चलितां बिभर्ति यदतः स्वस्मै हित चिन्त्यताम् ॥ ७८ ॥
प्राप्ताः श्रियः सकलकामदुघास्ततः किम् ॥ दत्तं पदं शिरसि विद्विषतां ततः किम् ॥ संपूरिताः
प्रणयिनो विभवैस्ततः किम् ॥ कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ ७९ ॥ तस्मादनन्तमजर

परमं प्रकाशं तच्चित्त चिन्तय किमेभिरसद्विकल्पैः ॥ यस्यानुषङ्गिण इमे भुवनाधिपत्ययोगादयः
कृपणजन्तुमतां भवन्ति ॥ ८० ॥ जैनं मुनिव्रतमशेषभवात्तकर्म-सन्ताननतानवकरं स्वयमभ्युपेतः ॥ कुर्या
तदुत्तरतरं च तपः कदाऽहं, भोगेषु निःस्पृहतया परिमुक्तसङ्गः ॥८१॥ यामेव रात्रिं प्रथमामुपैति, गर्भे
वसत्यै नरवीर ! लोकः॥ ततः प्रभृत्यस्खलितप्रयाणः, स प्रत्यहं मृत्युसमीपमेति ॥८२॥ तित्थे सुत्तत्थाणं,
गहणं विहिणा उ तत्थ तित्थमिदं ॥ उभयन्नू चेव गुरू, विही उ विणयाइ ओ चित्तो ॥ ८३ ॥ उभयन्नू
विय किरिया-परो दढं पवयणाणुरागी य ॥ ससमयपरूवगो परि-णओ य पन्नो य अच्चत्थं ॥ ८४ ॥ अस-
त्याः सत्यसङ्काशाः, सत्याश्चासत्यसंनिभाः ॥ दृश्यन्ते विविधा भावा-स्तस्माद्युक्तं परीक्षणम् ॥ ८५ ॥
अतथ्यान्यपि तथ्यानि, दर्शयन्त्यति-कौशलाः ॥ चित्रे निम्नोन्नतानीव, चित्रकर्मविदो जनाः ॥ ८६ ॥ तिहिं
उतराहिं तह रोहिणीहिं, कुज्जा उ सेहनिक्खमणं ॥ गणिवायए अणुन्ना, महव्वयाणं च आरुहणा ॥ ८७ ॥
चउद्दसीं पन्नरसिं, वज्जेज्जा अट्ठमिं च नवमिं च ॥ छट्ठिं च चउत्थिं च बा-रसिं च दोण्हंपि पक्खाणम् ॥ ८८ ॥
उच्छुवणे सालिवणे, पउमसरे कसुमिए व वणसंडे ॥ गंभीरसाणुणाए, पयाहिणजले जिणहरे वा ॥ ८९ ॥
पुव्वाभिमुहो उत्तर-मुहो व दिज्जाहवा पडिच्छेज्जा॥ जाए जिणादओ वा, दिसाए जिणचेइयाइं वा ॥ ९० ॥
नाणस्स होइ भागी, थिरयरओ दंसणे चरित्ते य ॥ धण्णा आवकहाए, गुरुकुलवासं न मुञ्चन्ति ॥ ९१ ॥
धन्यस्योपरि निपत-त्यहितसमाचरणधर्मनिर्वापी ॥ गुरुवदनमलयनिसृतो, वचनरसश्चन्दनस्पर्शः ॥ ९२ ॥

रागद्वेषौ यदि स्यातां, तपसा किं प्रयोजनम् ॥ तावेव यदि न स्यातां, तपसा किम्प्रयोजनम् ॥ ९३ ॥ पडि
मग्गस्स मयस्स य, नासइ चरण सुअ अगुणणाए ॥ नो वेयावच्चकय, सुहोदय नासइ कम्म ॥ ९४ ॥
जह भमरमहुअरिगणा, निवयन्ति कुसुमियम्मि वणसडे ॥ इय होइ निवइयव्व, गेलण्णे कइयवजढेण
॥ ९५ ॥ धम्मत्थमुज्जएण, सव्वस्सापत्तिय न कायव्व ॥ इय सजमोऽवि सेओ, एत्थ य भयव उदाहरण
॥ ९६ ॥ सो तावसासमाओ, तेसिं अप्पत्तिय मुणेऊण ॥ परम अबोहिबीअ, तओ गओ हतऽकालेवि
॥ ९७ ॥ इय अन्नेणऽवि सम्म, सक्क अप्पत्तिय सइ जणस्स ॥ नियमा परिहरियव्व, इयरम्मि सतत्तचिं-
ताओ ॥ ९८ ॥ ममैवाय दोषो यदपरभवे नार्जितमहो ॥ शुभ यस्माल्लोको भवति मयि कुप्रीतिहृदयः ॥
अपापस्यैव मे कथमपरथा मत्सरमय ॥ जनो याति स्वार्थ प्रति विमुखतामेत्य सहसा ॥ ९९ ॥
अभिसन्धेः फल भिन्न-मनुष्ठाने समेऽपि हि ॥ परमोऽतः स एवेह, वारीव कृषिकर्मणी ॥ १०० ॥ उप्पण्णा
उप्पण्णा, माया अणुमग्गओ निहतव्वा ॥ आलोअण निंदण गर-हणाइ न पुणो विधीयति ॥ १०१ ॥
अणागारं पर कम्म, नेव गूहे न निण्हवे ॥ सुई सया वियडभावे, असससे जिइदिए ॥ १०२ ॥ सिद्धेर्विश्वा
सिता मूल, यद्यूथपतयो गजाः ॥ सिंहो मृगाधिपत्येऽपि, न मृगैरनुगम्यते ॥ १०३ ॥ लोओ परस्स दोसे,
हत्थाहत्थि गुणे य गिण्हतो ॥ अप्पाणमप्पणचिय, कुणइ सदोस च सगुण च ॥ १०४ ॥ कुदृष्टं कुश्रुत
चैव, कुज्ञात कुपरीक्षितम् ॥ कुभावजनक सन्तो, भापन्ते न कदाचन ॥ १०५ ॥ निराकरिष्णुर्यदि नोप

लभ्यते, भविष्यति क्षान्तिरनाश्रया कथम् ॥ यदाश्रयात्क्षान्तिफलं मयाऽऽप्यते, स सत्कृतिं कर्म च नाम नार्हति ॥ १०६ ॥ संसारवर्त्यपि समुद्विजते विपद्भ्यो, यो नाम मूढमनसां प्रथमः सनूनम् ॥ अम्भोनिधौ निपतितेन शरीरभाजा, संसृज्यतां किमपरं सलिलं विहाय ॥ १०७ ॥ प्रायेणाकृतकृत्यत्वा-न्मृत्योरुद्विजते जनः ॥ कृतकृत्याः प्रतीक्षन्ते, मृत्युं प्रियमिवातिथिम् ॥ १०८ ॥ अत्वरापूर्वकं सर्वं, गमनं कृतधमेव वा ॥ प्रणिधानसमायुक्त-मपायपरिहारतः ॥ १०९ ॥ भोगा दानेन भव-न्ति देहिनां सुरगतिश्च शीलेन ॥ भावनया च विमुक्ति-स्तपसा सर्वाणि सिद्ध्यन्ति ॥ ११० ॥ कम्माइ नूणं घणचिक्कणाइं, कढिणाइं वज्जसाराइं ॥ णाणड्ढयंपि पुरिसं, पंथाओ उप्पहं नेंति ॥ १११ ॥ वज्जेज्जा संसग्गिं, पासत्थाईहिं पावमित्तेहिं ॥ कुज्जा उ अप्पमत्तो, सुद्धचरित्तेहिं धीरेहिं ॥ ११२ ॥ निर्जितमदमदनानां, वाक्कायमनोविकाररहितानाम् ॥ विनिवृत्तपराशाना-मिहैव मोक्षः सुविहितानाम् ॥ ११३ ॥ असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः ॥ प्रिया वृत्तिर्न्याय्या मलिनमसुभङ्गेऽप्यसुकरम् ॥ विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां ॥ सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ११४ ॥ आणोहेणाणंता, मुक्का गेवेज्जगेसु य सरीरा ॥ न य तत्थाऽसंपुण्णाए, साहुकिरियाइ उववाओ ॥ ११५ ॥ यच्च कामसुखं लोके, यच्च दिव्यं महासुखम् ॥ वीतरागसुखस्येद-मनन्तांशो न वर्त्तते ॥ ११६ ॥ अशोकवृक्षः सुरपुष्पवृष्टि-र्दिव्यो ध्वनिश्चामरमासनञ्च ॥ भामण्डलं दुन्दुभिरातपत्रं, सत्प्रातिहार्याणि जिनेश्वराणाम् ॥ ११७ ॥

॥ पद्यानि कतिचिद्योगबिन्द्वादिष्वागतानीत्युपेक्षितानि ॥ इति धर्मबिन्दुवृत्त्युद्धृतानि पद्यानि ॥

## ॥ (१०) साफलाष्टकप्रकरणम् ॥

अविधायापि हिंसां, हिंसाफलभाजनं भवत्येकः । कृत्वाप्यपरो हिंसां, हिंसाफलभाजनं न स्यात् ॥१॥
एकस्याल्पा हिंसा, ददाति काले तथा फलमनल्पम् ॥ अन्यस्य महाहिंसा, स्वल्पफला भवति परिणामे ॥ २॥
एकस्यैव सतीमस्य, दिशति फल सैवमन्यमन्यस्य ॥ भवति सहकारिणामपि, हिंसावैचित्र्यमत्रफलकाले ॥३॥
प्रागेव फलति हिंसा १, क्रियमाणा फलति २ फलतिच कृतार्थो ३ ॥ आरब्धा चाप्यकृता, फलति ४ हिंसा
नुभावेन ॥ ४ ॥ एकः करोति हिंसां, भवन्ति फलभोगिनस्तथा बहवः ॥ बहवो विदधति हिंसां, हिंसाफल
मुग्भवत्येकः ॥ ५ ॥ कस्यापि दिशति हिंसा, हिंसाफलमेकमेव फलकाले ॥ अन्यस्य सैवहिंसा, दिशत्य
हिंसाफलं विपुलम् ॥ ६ ॥ हिंसाफलमपरस्य तु, ददात्यहिंसाफलं तु परिणामे ॥ इतरस्य पुनर्हिंसा, दिशत्यहिं
साफलं नान्यत् ॥ ७ ॥ इतिविविधभंगगहने, सुदुस्तरे मार्गमूढदृष्टीनाम् ॥ गुरवो भवन्तु शरणं, प्रबुद्धनय
चक्रसञ्चाराः ॥ ८ ॥ हिंसाफलाष्टकप्रकरणं समाप्तम् ॥

---

॥ सुविहितशिरः शेखर श्रीहरिभद्रसूरिविरचितं स्याद्वादमीत्या मङ्गारेण
हिंसाफल निरूपकमष्टक प्रकरण समाप्तम् ॥

---

## ॥ ( ११ ) अथ श्री सर्वज्ञसिद्धिप्रकरणम् ॥

लक्ष्मीभृद् वीतरागः क्षतमतिरखिलार्थज्ञताऽऽश्लिष्टमूर्ति-र्देवेन्द्राच्योंऽप्रसादी परमगुणमहारत्नदोऽकिश्चनेशः। तच्चातच्चेतिवक्ता नवितथवचनो योगिनां भावगर्भ, ध्येयोऽनङ्गश्च सिद्धेर्जयति चिरगतो मार्गदेशी जिनेन्द्रः ॥ १ ॥ नास्त्येवाऽयं महामोहात्, केचिदेवं प्रचक्षते । कृपया तत्प्रबोधाय, ततः सन्न्याय उच्यते ॥ २ ॥ सर्वज्ञाप्रतिपत्तिर्य-न्मोहः सामान्यतोऽपि हि । नास्त्येवाभिनिवेशस्तु, महामोहः सतां मतः ॥ ३ ॥ अस्माच्च दूरे कल्याणं, सुलभा दुःखसम्पदः । नाज्ञानतो रिपुः कश्चि-दत एवोदितं बुधैः ॥ ४ ॥ महामोहाभिभूताना-मित्यनर्थो महान् यतः । अतस्तत्त्वविदां तेषु, कृपाऽवश्यं प्रवर्त्तते ॥ ५ ॥ श्रुत्वैतं चेह सन्न्यायं, तथा क्लिष्टस्य कर्मणः । क्षयोपशमभावेन, प्रबोधोऽप्युपपद्यते ॥ ६ ॥ तदभावेऽपि तद्दोषात्, सफलोऽयं परिश्रमः । कृपाभावत एवेह, तथोपायप्रवृत्तितः ॥ ७ ॥ श्रोतॄणामप्रबोधेऽपि, यन्मुनीन्द्रैरुदाहृतम् । आख्यातॄणां फलं धर्म-देशनायां विधानतः ॥ ८ ॥ अलमत्र प्रसङ्गेन, प्रकृतं प्रस्तुमोऽधुना । पूर्वपक्षस्तु सन्न्याय-स्तत्रातः किश्चिदुच्यते ॥९॥ प्रत्यक्षादिप्रमाणगो(णैर्गो)-चरातिक्रान्तभावतः । असाध्वी किल सर्वज्ञ-कल्पनाऽतिप्रसङ्गतः ॥१०॥ प्रत्यक्षेण प्रमाणेन, सर्वज्ञो नैव गृह्यते। लिङ्गमप्यविनाभावि, तेन किश्चिन्न दृश्यते ॥ ११ ॥ नचाऽऽगमेन यदसौ, विध्यादिप्रतिपादकः । अप्रत्यक्षत्वतो नैवो-पमानेनापि गम्यते ॥ १२ ॥ नार्थापत्त्या हि सर्वोऽर्थ-स्तं विनाऽप्युपपद्यते । प्रमाणपञ्चकावृत्ते-स्तत्राभावस्य मानता ॥ १३ ॥

रागादिप्रक्षयाधारस्य, सर्वज्ञत्वमिहेष्यते । तेष[illegible]त्मस्वभावत्वात्, प्रक्षयो नोपपद्यते ॥१४॥ अथ नात्मस्व भावास्ते, सर्वज्ञः सर्व एव हि । अरागादिस्वभावत्वा-न्न वा कश्चित् कदाचन ॥ १५ ॥ किञ्च—जात्यादि युक्तस्यायं, वक्ताऽसौ गीयते परैः । ततः कथं नु सर्वज्ञो ?, यथोक्तन्यायवादिना ॥ १६ ॥ असाविति न सर्वज्ञो, वक्तृत्वादेवदत्तवत् । यं यं सर्वज्ञमित्याहु-स्त तमेतेन वारयेत् ॥ १७ ॥ अवश्य जातिनामभ्यां, स निर्देश्यः परैरपि । निर्दिष्टश्चेत् स वक्तृत्वा-दसर्वज्ञः प्रसज्यते ॥ १८ ॥ सर्वो विशेषः सर्वज्ञो, वक्तृत्वेन ह्यपोह्यते । अपोदितविशेषं च, सामान्यं क्वावतिष्ठताम् ? ॥ १९ ॥ न वक्तृत्वमदेहस्य, न चासौ कर्मणा विना । न तद्रागादिशून्यस्य, वक्तृत्वं तन्निबन्धनम् ॥ २० ॥ विवक्षया च वक्तृत्वं, सा चेच्छाभावतो हि यत् । रागस्ततश्च वक्तृत्वात्, न सर्वज्ञ इति स्थितम् ॥ २१ ॥ (इति सर्वज्ञताप्रतिषेधपूर्वपक्षः)

अत्रोच्यते यत्तावदुक्तं 'प्रत्यक्षादिप्रमाणगो(णैर्गो)चरातिक्रान्तत्वादसाध्वी सर्वज्ञकल्पने' ति, तदयुक्तं, कुतः ?, यतो न सर्वपदार्थग्राहीन्द्रियप्रत्यक्षमिति तद्गोचरातिक्रान्तत्वेऽपि भावाना नावश्यमसत्तासिद्धि रतिप्रसङ्गात्, तदगोचराणामपि सतामेवानुमानादिविषयतयेष्टत्वात्, अन्यथाऽनुमानादेरप्यसत्तामात्रत्वे सति अतिप्रसङ्गात्, न च सर्वजनप्रत्यक्षगोचरातिक्रान्तत्वे तत्र चः प्रमाणमस्ति, तद्वेतसां परोक्षत्वात्, तदभ्युपगमे चातीन्द्रियार्थदर्शिनः सत्तासिद्धिः, तत्संवादानिवृत्तेश्च, न हि सर्वजनप्रत्यक्षगोचरातिक्रान्ता अपि च ध्वरविषाणादिवत् सन्ति धर्मादय इति तत्संवादानिवृत्तिः । न चेयं तत्त्वतः प्रत्यक्षम्, असाक्षाद-

सम्पूर्णवस्तुपरिच्छेदात्मकत्वात्, प्रयोगश्च–इन्द्रियमनोनिमित्तं विज्ञानमप्रत्यक्षं, ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मकत्वात्, धूमादग्निज्ञानवत्, विपक्षः केवलम् ॥ न प्रत्यक्षादिविरोधिनी प्रतिज्ञा, अस्य साक्षात्सम्पूर्णवस्तुपरिच्छेदायोगात्, अनीदृशस्य च प्रत्यक्षत्वानुपपत्तेः ॥ नासिद्धो हेतुः, धर्मिधर्मत्वात्, यथोदितविज्ञानस्य हि ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मकत्वं, स्वभावतस्तथाप्रतीतेः, अतत्स्वभावत्वे तदनिमित्तत्वप्रसङ्गात् ॥ नानैकान्तिकः, यथोदितविपक्षेऽभावात्, नहि केवले ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मकत्वमस्ति, तस्य तथाविधात्मार्थनिबन्धनत्वात् ॥ न विरुद्धोऽपि, विपक्ष एवाभावात् ॥ इन्द्रियोपलब्धिनिमित्तमन्तरा व्याप्त्यन्तराद्यपेक्षारूपत्वस्य प्रतीतिबाधितत्वात् विशेषविरुद्धस्य तत्त्वतोऽविरुद्धत्वात्, अन्यथा सर्वत्र भावादेव च हेतुव्यवहारोच्छेदप्रसङ्गात् ॥ दृष्टान्तोऽपि न साध्यादिविकलः, धूमादग्नेर्ज्ञानस्याप्रत्यक्षत्वसिद्धेः, ग्राह्यग्रहीतृव्यतिरिक्तनिमित्तोत्थापितप्रत्ययात्मकत्वप्रतीतेश्च ॥ न साधनाव्यावृत्त्यादि, केवलादुभयस्यापि निवृत्तेः, आत्मनः साक्षादर्थपरिच्छेदात् सम्पूर्णार्थप्रतीतेश्च ॥ आह–अधिकृतप्रत्यक्षेणापि साक्षादर्थपरिच्छित्तिः, न, अक्षैर्व्यवधानात्, तदभावेन तदभावात्, ज्ञानोत्पत्तिस्तेभ्यः, तत्परिच्छित्तिस्तु साक्षादेवेति चेत्, न, तद्व्यतिरेकेण तदसिद्धेः, अतत्स्वभावस्योत्पत्तौ पुनस्तत्स्वभावत्वविरोधात्, न चानेन सम्पूर्णवस्त्ववगमो, नीलादेरपि तारतम्यव्यावृत्त्याद्यपरिच्छित्तेस्तथाऽननुभवात्, नरसिंहे सिंहज्ञानतुल्यत्वादिति ।

अर्थस्य भावस्य कार्यस्याभावे इन्द्रियादीनां तेन च तेषामन्यथासिद्धेः, तदभ्युपगमे तेषां लिङ्गत्वानुपपत्तिरिति चेत्, न, ज्ञाप्यज्ञापकभावेन प्रतिबन्धासिद्ध्यसिद्धेः, न च सामग्र्यपेक्षया प्राग्भवत् ज्ञानजननस्वभावत्वमेषां, सर्वथा तदभिन्नस्वभावत्वे ततस्तत्प्रतीतिप्रसङ्गात्, स्वभावभेदे च सिद्धमेषां ज्ञापकत्वमिति । आह–एष मन्यर्मीयो ज्ञापकधर्मातिक्रमः, अज्ञातज्ञापनात्, न हि धूमादावपि तज्ज्ञानाविधुरः सन्नर्थज्ञानं, तथा तस्य भावात्, अक्षेणैवार्थप्रतीतेरिति, न, स्वभावविशेषतस्तद्भावसिद्धेरज्ञातज्ञापकस्वभावत्वात्, ज्ञापकस्वभावस्य चेह प्रयोजक, अन्यथा कार्ये व्यतिरेकतस्तत्कारणत्वाङ्गीकरणेऽपि तत्त्वतस्तद्वदेतेषां हेतुधर्मातिक्रमः, बुद्ध्यादियुक्तत्वाभ्युपगमाच्च, न चैतदनुपपत्तिक्षमो, तेषामेव त्वचेतनत्वेन ज्ञातृत्वायोगात्, किञ्च परोक्षमात्रता चेह प्रतिपादयितुमिष्टा मात्वप्रतीतृव्यतिरिक्तनिमित्तमात्रत्वेनेत्यनुचितः सर्वसाधर्म्योभिनिवेशः, न चैव केवलं, मासप्रतीतृमात्रापेक्षितत्वात्, कर्मक्षयादेश्च क्षयोपशमादितुल्यत्वादित्यलं प्रसङ्गेन ।
न चाऽशेषपदार्थभाव्यतीन्द्रियप्रत्यक्षगोचरातिक्रान्तत्वमस्य, उभयासिद्धेः अभ्युपगमविरोधात् विवादानुपपत्तेश्च, अनुमानगोचरातिक्रान्तत्वं पुनरसिद्धमेव, सर्वे धर्मादयः कस्यचित् प्रत्यक्षाः, ज्ञेयत्वात्, घटवत्, विपक्षो न किञ्चिदित्यनुमानसद्भावात् । अत्राह–नेदमनुमानं, तदाभासत्वात्, इह अप्रसिद्धविशेषणत्वादप्रसिद्धविशेषणः पक्षः, तथाहि–सर्वे धर्मादयः कस्यचित् प्रत्यक्षा इत्यत्रातीन्द्रियप्रत्यक्षेण प्रत्यक्षस्य साधयितुमिष्टं, न तत्कस्यचित् प्रसिद्धमिति, हेतुरप्यनैकान्तिकः, अप्रत्यक्षस्याप्यभावस्य ज्ञेयत्वोपपत्तेः,

दृष्टान्तोऽपि साध्यविकलः, जात्यन्तरप्रत्यक्षेण प्रत्यक्षत्वासिद्धेः॥ इतरोऽपि साधनाव्यावृत्तः न किञ्चिदिति तुच्छेऽपि ज्ञेयत्वानिवृत्तेरिति ॥अत्रोच्यते॥ यत्तावदुक्तमप्रसिद्धविशेषणत्वादप्रसिद्धविशेषणः पक्षः इति, एतदयुक्तम्, अनुमानोच्छेदप्रसङ्गात्, सर्वत्राप्रसिद्धविशेषणपक्षाभासत्वापत्तेः, एवं ह्यनित्यः शब्द इत्यादावपि वर्णाद्यात्मकव्यक्तिसमवाय्यनित्यत्वेनानित्यत्वं साधयितुमिष्टं, न तत् क्वचित् प्रसिद्धमित्यपि वक्तुं शक्यत्वाद्, अनित्यत्वजातिपरिग्रहाददोष इति चेत्, इतरत्रापि प्रत्यक्षत्वजातिपरिग्रहे को दोषः?, इष्टासिद्धिरिति चेत्, शब्दानित्यत्वादौ समान एव दोषः, लौकिकत्वादनित्यत्वादेरसमानता इतिचेत्, न, अलौकिकस्यापि वेदापौरुषेयत्वादेर्मेयत्वेन त्वयाऽप्यङ्गीकृतत्वात्, हेतुरप्यदुष्टः, अभावस्याप्रत्यक्षत्वासिद्धेर्वस्तुधर्मत्वात्, अन्यथा वस्त्वनुपपत्तेः, तस्य च प्रत्यक्षत्वात्, अतद्धर्मस्य चात्यन्तासतो ज्ञेयत्वायोगात्, मानेन ज्ञायमानस्य तदुपपत्तेः, तुच्छे च मानप्रवृत्त्यसम्भवादभावाख्यमानस्य च तदविशेषात् तद्वदप्रवृत्तेः ॥

अपरस्त्वाह सर्वज्ञज्ञानस्य ज्ञेयत्वेऽपि प्रत्यक्षत्वानुपपत्तेः, तेनार्थप्रत्यक्षत्वात्, तत्प्रत्यक्षत्वे च तदप्रत्यक्षत्वप्रसङ्गात्, तदन्यसर्वज्ञप्रत्यक्षत्वे चानवस्थापत्तेर्व्यभिचार इति, एतदप्यसत्, तस्यार्थग्रहणरूपस्य स्वसंविदितत्वेनोक्तदोषानुपपत्तेरुभयप्रत्यक्षत्वात्, अन्यथाऽर्थप्रत्यक्षत्वासिद्धेः हृल्लेखशून्यस्याविकृतत्वेनात्मनो दर्शिनो दर्शनायोगात्, विकृतत्वे चार्थं पश्यतस्तद्विक्रियैव चिद्रूपाऽज्ञानमिति सर्वज्ञत्वानुपपत्तेश्च ॥

'अपरस्त्वाह हेतुर्येनैव सहाविनाभूतो दृष्टस्तस्यैव गमको भवति,' यथा धूमोऽग्नेः, न सद्भावमात्रात् यस्य

कस्य. त्, यथा स एव धूमः पानीयस्य, न चातीन्द्रियेषु भावेषु प्रत्यक्षत्वाविनाभावि ज्ञेयत्वं दृष्टं, कथं तत् तेषु तद् गमयेत् ?, अत्रोच्यते, सामान्यतो दृष्टानुमाननीत्या तत् तेषु तद् गमयेत् इति, यथा गतिमानादित्यो देशान्तरप्राप्तेः देवदत्तवदित्यत्र, तथाहि—न दिनकरे गतिमत्त्वेन देशान्तरप्राप्तिरविनाभूता दृष्टा, अथ चासौ तद् गमयति, देवदत्ते दृष्टेति सा गमयतीति चेत्, घटेऽपि प्रत्यक्षत्वेन ज्ञेयत्वमविनाभावि दृष्टमेवेति समानमेतत् । अतीन्द्रियप्रत्यक्षत्वेन न दृष्टमिति चेत्, देवदत्तेऽपि न तथा गगनगतिमत्त्वेन देशान्तरप्राप्तिरिति समानमेव ॥ न साधर्म्यदृष्टान्तदोषः, आत्यन्तरप्रत्यक्षेण तत्र प्रत्यक्षत्वासिद्धावपि सामान्येन प्रत्यक्षत्वसिद्धेः न्याय्यत्वमेव, विशेषानुगमाभावात् ॥ न वैधर्म्यदृष्टान्तदोषः, न किञ्चिदिति तुच्छाभावतो ज्ञेयत्वनिवृत्तेः, प्रतिपादनोपायत्वात् तदभिधाने दोषोऽन्यथा निःस्वभावतया न ततो ज्ञानजन्मातिप्रसङ्गादिति ॥ अथ वेदमनुमानम्—अनेकशास्त्रकलासंवेदनसमन्विते कस्मिंश्चित् पुरुषे सर्वज्ञ इत्युपचर्यमाणो व्यवहारस्तदन्यमुख्यापेक्षः, गौणत्वात्, शौर्यक्रौर्यादिमति चैत्रेऽसिंहे सिंहव्यवहारवत्, विपक्षश्चैत्रव्यवहार इति ॥ नात्र प्रत्यक्षादिविरोधिनी प्रतिज्ञा, तल्लक्षणायोगात्, नासिद्धो हेतुः तत्र गौणत्वस्योभयोः सिद्धत्वात् ॥ नानैकान्तिकः, विपक्षव्यावृत्तेः ॥ न विरुद्धो, दृष्टान्तवत् प्रमाणान्तरप्रसिद्धतदन्यमुख्यापेक्षत्वसाधनस्य तद्ग्राहकप्रमाणप्रसिद्ध्यभ्युपगमेऽनवकाशत्वात् ॥ न साधनधर्मासिद्धः साधर्म्यदृष्टान्तः, उभयधर्मप्रसिद्धेः ॥ न साधनाव्यावृत्तादिरितरः, चैत्रे स्वव्य

वहारात्तदुभयनिवृत्तेरिति॥ आगमगोचरातिक्रान्तत्वमप्यसिद्धं, 'स्वर्गकेवलार्थिना तपोध्यानादि कर्त्तव्यम्' इतिवचनप्रामाण्यात्, केवलिनश्च सर्वज्ञत्वात्, पुरुषकर्तृत्वादिदमप्रमाणमिति चेत्, न तावद् वक्तृत्वेन तत्कर्तृकत्वासिद्धिः, न चैतत् स्वतन्त्रविरोधि 'नमस्तीर्थाय' इतिवचनात्, न च पुरुषवक्तृकत्वमप्यस्याप्रामाण्ये निमित्तं, वेदाप्रामाण्यप्रसङ्गात्, न च तदवक्तृका वेदाः, पुरुषव्यापारमन्तरेण नभस्येतद्वचनानुपलब्धेः आनुपूर्वीनियतिभावादेश्चेतरत्रापि तुल्यत्वात्, न चार्हद्वक्तृकत्वेनास्य प्रामाण्यं, निश्चिताविपरीतप्रत्ययोत्पादकत्वेन कथञ्चित् स्वत एव तदभ्युपगमाद्, अन्यथा तदनुपपत्तेः, अनुपपत्तिश्चास्य प्रमाणाभावात्, तस्य चोपादानेतरनिमित्तप्रभावेण स्वपराधीनत्वादर्थग्रहणपरिणामप्रत्ययान्तरानुभवतः, स्वपरत एव ज्ञप्तेः, कर्मकरणनिष्पाद्यस्य तदुभयापेक्षित्वेन स्वपरतः स्वकार्यप्रवर्त्तनात्, न च विज्ञानस्यार्थपरिच्छेदलक्षणोऽपि धर्मो व्यतिरिक्त एव, तस्यायमिति सम्बन्धानुपपत्तेः, कथञ्चिदव्यतिरेके च तद्वत्तस्यापि भावः, न च ज्ञानस्यापि न परतः 'इन्द्रियमनोऽर्थसन्निकर्षो हि ज्ञानस्य हेतुः' इतिवचनात् परतो भावसिद्धेः, न चागमनित्यत्वेऽपि सर्वज्ञकल्पनावैयर्थ्यं, तस्य विहितानुष्ठानफलत्वात्, न चादृश्यत्वेनास्य फलकल्पनानुपपत्तिः, स्वर्गादिभिरतिप्रसङ्गात्, न च ते सुखादिरूपत्वाद् दृश्या एवेति न्याय्यं, प्रकृष्टसुखविशेषस्यादृश्यत्वात्, न च सुखमात्रानुभवरूप एव स्वर्गः, अतिप्रसङ्गात्, यतः कुतश्चित्तद्भावेन चोदनानर्थक्यापत्तेश्च, न च सुखसामान्यदर्शनात् वः प्रकृष्टतद्विशेषसम्भवानुमानमबाधकं, ज्ञानसा-

मान्यदर्शनेन प्रकृष्टतद्विशेषसम्भवानुमानप्राप्तेः॥ स्यादेतत्॥ अर्हत्प्रणेयागमस्य वक्त्रागमस्य केवल्युक्तत्व
केवलित्वाद्यस्य तदुक्तानुष्ठानफलत्वमितीतरेतराश्रयदोषः, नैवम्, वेदवक्तृष्वपि हिरण्यगर्भादिषु समान-
त्वात्, तेषामपि विशेषेण तदुक्तानुष्ठानफलत्वात्, अनादिमत्त्वाद्वेदस्य तद्वन्त एव वक्तार इति चेत्, इतरत्रापि
समानमेतत्, अर्हतामप्यनादित्वाभ्युपगमात्, तेऽन्यवेदवक्तृवेदवक्तार इति चेत्, अर्हन्तोऽप्यन्यार्हदुक्ता
गमवक्तार इति समानमेव, तदन्यार्हदुक्तस्यानपेक्षितत्वेन तेषां तद्वक्तृत्वादसमानमिति चेत्, न, अनपे
क्षित्वासिद्धेः, तथैवानुपूर्व्याऽभिधानात्, अन्यार्हन्मुखाधीतागमवक्तारो न भवन्तीत्यसमानमेवेति चेत्, न,
जातिस्मरणातिशयवेदवक्तृत्ववत् केवलातिशयतस्तथा तथाऽऽगमवक्तृत्वेऽन्यार्हन्मुखाधीतत्वस्याप्रयोजक-
त्वात्, अन्यदा चान्यतद्वक्तृमुखाधीतत्वस्य तत्रार्हत्यपि समानत्वात्, अवेदत्वादागमस्यासमानमिति
चेत्, न, अवेद एवागमे न्यायमार्गतुल्यतया प्रतिपादयितुमिष्टत्वात्, अन्यथा वेदस्याप्यनागमत्वात्
नास्मदुक्तन्यायानुपातित्वमिति वक्तुं शक्यत्वात्, भवदागमप्रामाण्ये विगानमिति चेत्? वेदप्रामाण्येऽपि
तुल्यमेतत्, तथापि स एव प्रमाणं नागम इति चेत्, न, कोशपानादृते प्रमाणाभावात्, एवमितरेतराश्र
यदोषानुपपत्तेश्चोदनानुष्ठानफलत्वेनागमात् सिद्धः सर्वज्ञ इति। उपमानगोचरातिक्रान्तत्वमपि न न्याय
सङ्गतम्, उपलब्धसर्वज्ञस्य प्रमातुरशेषसंशयपरिच्छेदाविना तदन्योपलब्धौ तत्सादृश्यप्रतीतिसिद्धेः, अगृ
हीतगोगवयस्य गवयाप्रसिद्धेः, न चैतावता गोस्तद्गोचरातिक्रान्तत्वम्, अनभ्युपगमात्, न च केनचिद्

गृह्यत इत्यसिद्धं, विकल्पानुपपत्तेः, तथाहि–किं प्रमाणेन न गृह्यते उताप्रमाणेन वेति वाच्यं ?, यद्यप्रमाणेन, सिद्धं साध्यते, तस्याप्रमाणेन ग्रहणानभ्युपगमात्, अथ प्रमाणेन, किं तद्ग्राहकेणोतातद्ग्राहकेणेति?, न तावत्तद्ग्राहकेण, तस्य तदग्रहणविरोधात्, तथाहि-तद्ग्राहकं न च तद् गृह्णातीतिविरुद्धमेतत्, अतद्ग्राहकाग्रहणे तु तदभावासिद्धिः,तदभावेऽपि घटादिभावसिद्धेः, तथाहि–न पटादिग्राहकेण प्रमाणेनागृह्यमाणा अपि सन्तो न सन्त्येव घटादयः, तद्ग्राहकं प्रमाणमेव नास्तीति चेत्, उच्यते, किं भवत एवोताहो सर्वप्रमातॄणामिति ?, यदि भवत एव, सिद्धं साध्यते, भवतः परोक्षत्वात् प्रवचनार्थानवगतेश्च, अथ सर्वप्रमातॄणामिति, अत्र न प्रमाणं, तच्चेतसामप्रत्यक्षत्वाद्, अन्यथा तदभावनिश्चयानुपपत्तेः, तत्प्रत्यक्षताभ्युपगमे च तत्संवेदनवतः तथाऽतीन्द्रियोपलम्भकत्वाभ्युपगमात् तद्भावसिद्धिरेव, प्रधानादीनामप्येवं प्रतिषेधानुपपत्तितः तत्सत्तापत्तेर्यत्किञ्चिदेतदिति चेत्, न, स्वतोऽदर्शनादतीन्द्रियोपलम्भकपुरुषवचनत औत्सुक्यानुपपत्तेश्च तत्प्रतिषेधसिद्धेः, असर्वज्ञेन तद्ग्रहणमपि न युक्त्युपपन्नमिति चेत्, न, हृद्गताशेषसंशयच्छेदादिना तद्ग्रहणोपपत्तेः । असम्पूर्णवैयाकरणादिभिरप्यवगतकतिपयपृष्टसूत्रादिकथितयथावस्थितार्थतत्त्वैः सम्पूर्णवैयाकरणादिग्रहणदर्शनात्, सर्वत्र तथा तद्व्यवहारसिद्धेः, अन्यथा तदुच्छेदप्रसङ्गात्, अब्राह्मणेन ब्राह्मणपरिज्ञानानुपपत्तेः, तत्स्वयंकथनस्य सर्वज्ञेऽपि तुल्यत्वाद्, हृद्गताशेषसंशयपरिच्छेद्यपीदानीं न कश्चिदुपलभ्यत इति चेत्, सत्यमिदं, इहेदानीं कालदोषतस्तदनभ्युपगमात्, तदानीमासीदित्यपि कथं ज्ञायत

इति चेत्, तदुपलम्भसम्प्रदायाविच्छेदेन, न स दुःसम्प्रदाय इत्यत्र किं प्रमाणमिति चेत्, प्रामाण्या
भिगमसम्प्रदायेऽपि समानमेतत्, तद्व्यवहारबाधाऽभावदर्शनादसमानमिति चेत्, न, इतरत्राप्युभयथा
ऽऽस्समानमेव, दृश्यते च वेदाध्ययनादिवत्प्रमस्कारस्यापनादिर्योबारहितो व्यवहार इति, अगृहीत-
गोगवयस्यापि गोरिव नोपमानगोचरातिक्रान्तत्वमेव, एतेनासर्वज्ञपुरुषसाधर्म्यादसर्वज्ञत्वोपमानमेव तत्र
युक्तमिति यदुच्यते परैस्तदपि प्रत्युक्त, न चोपमानोपमेययोः प्रसिद्धसाधारणधर्मातिरेकेण सर्वधर्मैरुप
मानप्रवृत्ति, यथा शर्वरी श्यामा देवदत्ता, तत्र हि साधारणश्यामत्वावच्छिन्नरूपतैव केवलं प्रतीयते, नान्ये
शर्वरीगता धर्माः, तदध्यारोपे तु शर्वरीरूपतैव स्यात्, इह चासर्वज्ञाः पुरुषा उपमानं, उपमेयो विवक्षितः
पुरुषविशेषः, कस्तयोः प्रसिद्धः साधारणो धर्म इति वाच्यं, वक्तृत्वपुरुषत्वादिरिति चेत् न, सिद्धसाध्यता
पत्तेः, यथा पुरुषो वक्ता तथाऽयमपीत्यभ्युपगमात्, एतत्साधर्म्यसिद्ध्या तत्रासर्वज्ञत्वस्यापि सिद्धिरिति
चेत्, न, देवदत्तायामपि श्यामत्वसिद्धेः तैक्ष्ण्यादिभावप्रसङ्गात्, दृष्टविरोधादप्रसङ्ग इति चेत्, इतरत्र तद्वि
रोधाभावः केन सिद्ध इति वाच्यं, तद्भावोऽपि केन सिद्ध इति चेत्, अविरुद्धविधेस्तेन विरोधेन सहावस्था-
नाभावनियमाभावतस्तत्सम्भवोपपत्तेः,अविरुद्धश्च ज्ञानप्रकर्षो वक्तृत्वादिनेति॥अर्थापत्तिगोचरातिक्रान्तत्व
युक्त्यनुपपन्नमेव, ' अग्निहोत्रं जुहुयात्स्वर्गकाम ' इत्यादौ दृष्टस्य हवनादेः भूतस्य च स्वर्गादेरर्थस्य तत्सा
ध्यसाधनसम्बन्धज्ञातारमन्तरेणानुपपत्तेः, अशक्यभावाय पुरुषेण ज्ञातुमतेऽतीन्द्रियार्थदर्शनात्, अपर

स्मात् पुरुषात् ज्ञायत इति चेत्, सोऽपि तेन तुल्यः नैवंजातीयकेष्वतीन्द्रियेष्वर्थेषु तज्ज्ञानप्रामाण्यमुपैत्यन्धानामिव ज्ञानं रूपविशेषेष्विति, एतेनानादिवृद्धसम्प्रदायः प्रत्युक्तः, सर्वेषामेवात्र वस्तुन्यन्धतुल्यत्वात्, अधिकृतवचनादेवासौ विज्ञायत इति चेत्, न, वाक्यार्थप्रतिपत्तावपि तन्निश्चयानुपपत्तेः, लौकिकवाक्ये क्वचित्तद्भावेऽप्यर्थातथाभावदर्शनात्, तस्य पुरुषबुद्धिप्रभवत्वेन तदायत्तोऽर्थातथाभावो नैवमस्य अपौरुषेयत्वादिति चेत्, न, एवमप्यधिकृतभेदवत्तदर्थभेदाशङ्कापत्तेः, प्रदीपवत् स्वार्थप्रकाशनाद् नापत्तिरितिचेत्, न, प्रदीपार्थवदविशेषेण तदर्थप्रतिपत्त्यसिद्धेः, सङ्केतादनेकधा तदर्थोपलब्धेः, तत्स्वभावत्वादनेकार्थत्वाच्च तस्यादोष इति चेत्, न, तथा विरुद्धार्थानुपपत्तेः, दृश्यते च 'स सर्वविद्यस्य' इत्यादौ सङ्केतभेदेन तदस्तित्वविरुद्धार्थप्रकाशनमिति, नास्तित्वमेव तत्राविपरीतमिति चेत्, न, इतरप्रकाशनानुपपत्तेः, प्रदीपेन्दीवररक्तप्रकाशवदुपपत्तिरिति चेत्, न, अविशेषेण तत्प्रकाशनप्रसङ्गात्, अदृष्टदोषात् तत् तथा प्रकाशनमिति चेत्, न, इतरत्राप्यविश्रम्भप्रसङ्गात्, तदेवादृष्टदोषात् नेतरदिति निश्चायकप्रमाणाभावात्, अतीन्द्रियार्थत्वाद् तत्साक्षात्कारिणश्चानभ्युपगमात्, तद्व्यतिरेकेण च तद्विशेषावगमोपायाभावादिति समाश्रीयतामतीन्द्रियार्थसाक्षात्कारी, तदभावे सतीष्टार्थासिद्धिरिति, तद्भावेऽप्यतादृशस्यातीन्द्रियार्थत्वात् तद्विवक्षावगमोपायाभाव इति चेत्, न, शब्दस्य प्रयोगकुशलप्रयुक्तस्य क्वचित् तदवगमनस्वभावत्वात्, अर्थमात्रप्रतिपत्त्या प्रतारके तद्याथात्म्यानवगम इति चेत्, न, भगवतो वीत-

रागत्वेन प्रतारकत्वानुपपत्तेः, प्रकृष्टौदासीन्यभावेन वीतरागस्य देशनाप्रवृत्तिरयुक्तेति चेत्, न, औदासीन्येनैव प्रवृत्तेः, तथाहि–न भगवतस्तिर्यङ्नरामरेषु देशनाया विशेषः, यथायोगं प्रवृत्तेः, तथाप्रवृत्तिरप्येकान्तौदासीन्यबाधिनीति चेत्, न, तस्या अन्यनिमित्तत्वात्, प्रवचनवात्सल्यादिनिमित्तप्रागुपात्ततीर्थंकरनामकर्मनिर्जरणहेतुत्वात्, उक्तं च–" तं च कहं वेइज्जइ ? अगिलाए धम्मदेसणादीहिं "मित्यादि, तत्कर्मभावे तत्क्षपणोपायप्रवृत्तेः कृतकृत्यत्वानुपपत्तिरिति चेत्, न, अनभ्युपगमात्, न हि भवस्थस्य भगवतः क्षीणमोहस्याप्येकान्तेन कृतकृत्यत्वमिष्यते, भवोपग्राहिकर्मयुक्तत्वात्, अन्यनिमित्तापि प्रकृष्टौदासीन्यबाधिनी प्रवृत्तिस्तदवस्थैवेति चेत्, न, स्थितिप्रवृत्त्या व्यभिचारात्, साऽप्रवृत्तस्यापि स्वरसत एवेति चेत्, तथाविधकर्मयुक्तस्य देशनाप्रवृत्तिरप्येवकल्पेत्यदोषः, अतीर्थंकरवीतरागदेशनाप्रवृत्तिरयुक्तेति चेत्, न, अनभ्युपगमात्, न हि सामान्यकेवलिनस्तथा देशनायां प्रवर्त्तन्त इत्यलं प्रसङ्गेन ॥

यच्चोक्तं 'प्रमाणपञ्चकावृत्तेस्तत्राभावस्य मानता' (श्लो० १३) इति, एतदप्ययुक्तं, विकल्पानुपपत्तेः, तथाहि–अभावप्रमाणं किं प्रमाणपञ्चकविनिवृत्तिमात्रं अभाव एव १, आहोस्विदात्मा ज्ञानविनिर्मुक्तः २, उताहो उपलभ्यवस्त्वन्तरात्मकं ३ इति, न तावत्तुच्छ एव, तस्य निरुपाख्यत्वेन सदभावपरिच्छेदकत्वानुपपत्तेः, ज्ञानस्य हि परिच्छित्तिर्धर्मो नाभावस्य, न चाभावपरिच्छेदकज्ञानजनकत्वमस्य, अभावत्वविरोधात्, तज्जननशक्त्यभावे तदनुत्पत्तेरतिप्रसङ्गात्, तदभ्युपगमे भावत्वापत्तिः, किंच–अभावाद् भवतीति कारणप्रतिषेधात्स्वज्ञान-

स्य निर्हेतुकत्वतः सदाभावादिप्रसङ्गः १ ॥ अथात्मा ज्ञानविनिर्मुक्तः, ततोऽपि तदभावनिश्चयाभावः, ज्ञानशू-
न्यत्वात्, ज्ञानस्य च निश्चयो धर्म्म इति, अथ 'चैतन्यं पुरुषस्य स्वरूपम्' इति वचनात् तदेव निश्चय इति, न
तर्हि ज्ञानविनिर्मुक्तः, तस्यैव ज्ञानत्वादिति २ ॥ अथोपलब्ध्यन्तरात्मकः, ततोऽपि तदभावनिश्चयाभावः, तद-
विषयसंसर्गेण तद्ग्रहणासिद्धेः, न चान्यत्वा(त्रा)भाववत् निश्चयो, न्यायविदः स्वभाववैचित्र्यतस्तत्सत्त्वा-
शङ्काऽनिवृत्तेः, तदविषयसंसर्गेण तद्ग्रहणाभ्युपगमे च न तस्यैकान्ततोऽसत्त्वमिति, अन्यस्त्वाह—अभावो
ह्यभावज्ञानमेव, प्रमेयं त्वस्य तुच्छं, न चायं कुलालादिवद् घटादौ व्यापारमनुभूय स्वपरिच्छेदकज्ञान-
हेतुः, अपि तु विज्ञेयतामात्रात्, न चास्येयमप्ययुक्ता, प्रमेयत्वानुपपत्तेः, न च स्वजन्यज्ञानपरिच्छेद्यत्वेन
भावत्वापत्तिः, भावज्ञानपरिच्छेद्यस्य तदभ्युपगमात्, न चानेनाविकृतोऽभावो न गम्यते, षष्ठास्तिकाय-
(अभाव)वत् नास्ति सर्वज्ञ इत्यभावप्रतीति(ते)रिति, एतदप्यसत्, अधिकृतज्ञानस्यापि तत उत्पत्त्य-
सिद्धेः, संयोगादिप्रतिषेध्यसंख्येतरकायापेक्षमनोविज्ञानात्मकत्वात्, अस्य चापरिमाणत्वात्, परि-
णीतितः इष्टविषयानुत्पत्त्या तत्परिच्छेदायोगात्, इतश्चाप्रमाणत्वं, नास्ति देवदत्त इत्येवमपि प्रवृत्तेः, न
चेदमक्षव्यापारजं, भाववत्तत्राक्षव्यापारानुपपत्तेः, अरूपाद्यात्मकत्वात्, अक्षस्य च विषयान्तरेऽप्यप्र-
वृत्तेः, न च वस्तुविशेषणीभूतत्वेनास्य ग्रहः, तथाविधस्य तद्विशेषणत्वासिद्धेः, सम्बन्धाभावात् तादा-
त्म्यतदुत्पत्त्यनुपपत्तेः, विशेषणविशेष्यभावस्य च तदप्रत्यक्षतया कल्पनायोगात्, वस्तुधर्म्मस्य च एका-

न्ततुच्छस्वाभावतः स्वराद्धान्तविरोधाभावः, न हि पररूपाभावः स्वरूपभावपृथग्भूत एवेत्येकान्ततुच्छताभावः, न चैवमसर्वज्ञे सर्वज्ञाभावापगमो नेष्यत, न चैवमपि तत्तुच्छतैव, तद्भावस्येतरत्राभावात्, एकान्ततुच्छभावस्य चाऽतुच्छे तत्तत्त्वभाव एवाभावादित्यतो नास्ति षष्ठोऽस्तिकाय इति प्रसिद्धोपादान एवाप्रमाणभूत एव विकल्पः, न साक्षात्तुच्छगोचरस्तत्प्रतिभासनेन विधिनिषेधाविषयत्वात्तस्येति, अपराभावानवगमाद्वैवास्तिकायेषु संख्यानियमादिसिद्धिरिति सूक्ष्मधिया भावनीयम् २ ॥

यथोक्त 'रागादिप्रक्षयात्' (श्लो० १८) इत्यादिना रागादीनामात्मस्वभावत्वात् प्रक्षयानुपपत्तिरिति, एतदप्ययुक्तं, पद्मरागकार्तस्वरमलस्य तत्स्वभावत्वेऽपि क्षारमृत्पुटपाकादेः प्रक्षयोपपत्तेर्विशुद्धिकल्याणतादर्शनात्, तदतत्स्वभावत्वे सर्वस्य पद्मरागादेर्विशुद्ध्याद्यविप्रसङ्गः, अमलस्य भावत्वात्, न वा कस्यचित् कदाचिद्, अमलस्वभावत्वेऽपि पूर्ववदनुपपत्ते , न पद्मरागादेर्मल सांसिद्धिक, भिन्नवस्तुत्वेन तदुपरञ्जकत्वादिति चेत्, आत्मनोऽपि रागादिषु तुल्यः परिहार, तथाहि–रागादिवेदनीयकर्म्माणवोऽप्यात्मनो भिन्नवस्तुतामनुभवन्तस्तदुपरञ्जका इति तत्त्वनीतिः, निसर्गशुद्धस्य कथं तदुपरञ्जका? कथं वा न भूयोऽपवर्गावस्थायामिति चेत्, पद्मरागादिष्वपि समानमेतत्, न ते निसर्गशुद्धा मलेनोपरज्यन्ते, किन्तु तद्ग्रस्ता एवोपजायन्त इति चेत्, आत्मन्यपि रागाद्यपेक्षया तुल्यमेतत्, अनादित्वात् स नोत्पद्यते इति चेत्, अनादिरेव तद्ग्रस्त इति कोऽत्र दोषः?, कृतककर्मसंयत्वात्तेषामनादित्वविरोध इति चेत्, न, कृतकत्वेऽप्यनुभूतवर्तमानभावातीत

कालवत् प्रवाहतोऽनादित्वसिद्धेः, अन्यथा प्राक्कालाभावतोऽबीजत्वेन पश्चादपि तदभावापत्तिः, न ह्यसत् सद्भवति, अतिप्रसङ्गात्, न चाननुभूतवर्तमानस्यातीतता, वर्त्तमानकल्पं च कृतकत्वमिति ॥

आह–कुतः पुनरमीषां प्रक्षय ? इति, उच्यते, प्रतिपक्षभावनातः, सा चानेकान्तभावना, तत्प्रतिपक्षादुपेक्षासम्भवसामर्थ्यदर्शनात्, इह "यतो यद्भवति तत्प्रतिपक्षान्न तद्भवितुमर्हति" इति न्यायः, गुणदोषैकान्तग्रहाच्च रागद्वेषौ, अतस्तत्प्रतिपक्षभूतादनेकान्तत एवोपेक्षासम्भवो नान्यथा, तथाहि–उभयात्मकैकत्वोपग्रहादुपेक्षैव दृश्यते स्त्रीशरीरादिषु तद्विदां, तस्यां गुणा दोषाश्च, ततः किमनयेति व्यवहारदर्शनात्, सा चोपेक्षा संवरवतां सत्त्वानां, निमित्ताऽभावेन अभावादागन्तुकमलस्य, तच्चोपेक्षा परिणामादिहेतुतः प्रक्षयात् ( च ) प्राक्तनस्य, समासादयतां ज्ञानवृद्धिं सूक्ष्मेक्षिकयापि वस्तुनि पश्यतां तदतदात्मकत्वमभ्यासातिशयेन प्रकृष्टौदासीन्यरूपा जायत इति प्रयासः, तदेव परमार्थतो वीतरागत्वं, उक्तं च–"औदासीन्यं तु सर्वत्र, त्यागोपादानहानितः ॥ वासीचन्दनकल्पानां, वैराग्यं नाम कथ्यते ॥ १ ॥" इति, प्रपञ्चितमेतद्भावनासिद्धाविति नेह प्रयासः ॥

यच्चोक्तं किंच जात्यादि–युक्तत्वादेवमादिना ॥ असर्वज्ञत्वसंसिद्ध्यै, प्रमाणं तत् परीक्ष्यते ॥२२॥ असाविति न सर्वज्ञो, वक्तृत्वाद् देवदत्तवत् ॥ तत्र किंचिज्ज्ञ इष्टश्चेत्, न ज्ञातं तेन किं मतम् ? ॥२३॥ यदि यागादिविधयो, मिथ्यार्थत्वेन निश्चिताः ॥ प्रोक्ता हिंसादयः सर्वे, यतो दुर्गतिहेतवः ॥ २४ ॥ अन्यत्वं च विरोधो

शक्यन्ते नैव सर्वथा ॥ ४० ॥ कायवाक्कर्म्मवृत्त्यापि, गुणदोषे न निश्चयः ॥ बुद्धिपूर्वोऽन्यथापि स्याच्छैलूषस्येव संसदि ॥४१॥ न यतो वीतरागत्वे, तथा चेष्टोपपद्यते ॥ क्लिष्टा प्रयोजनाऽभावा-न्ननु तत् किं न निश्चयः ॥४२॥ तथा नाम स्वभावत्वे, भवोपग्राहिकर्म्मणः ॥ कदाचिदुचितैषैव, ततः किं नोपपद्यते? ॥४३॥ साक्षादगम्यमानेषु, ततस्तत्र विनिश्चयः ॥ त एवं नैवमिति वा, छद्मस्थस्य न युज्यते ॥४४॥ न चात्र यस्तु सर्वज्ञः, स वक्ता नेति शक्यते ॥ वक्तुं तथाऽप्रसिद्धत्वा-दुच्यते चेन्न युक्तिमत् ॥ ४५ ॥ तदभावादथावृत्ति-स्तव हेतोर्न मानतः ॥ स सिद्ध इति सन्न्यायाद्, व्यतिरेको न पुष्कलः ॥ ४६ ॥

यच्चोक्तं 'न वक्तृत्वमदेहस्य' (श्लो २०) इत्यादिना वक्तृत्वं रागादिनिबन्धनमिति, एतदपि पारम्पर्येण तेषां तन्निबन्धनत्वे दोषाभावात् अबाधकमेव, इष्यन्त एव हि भगवतोऽतीता रागादयः, न च तन्निवृत्तौ तत्कार्यत्वेन तदैव देहनिवृत्तिप्रसङ्गः, तेषां तन्निमित्तकारणत्वात् तदभावेऽपि कार्यस्य कियन्तमपि कालमवस्थानाविरोधात्, खनित्राद्यभावेऽपि घटादिविनाशासिद्धेः, उपादाननिबन्धनं किमस्य वक्तृत्वस्येति चेद्?, उच्यते, भाषाद्रव्याण्यात्मप्रयत्नश्च, अत एव क्वचित् प्रक्रान्तवस्तुनि रागाद्यभावेऽपि सतां साक्षादेव वक्तृत्वोपलब्धेः, अन्यथा तदभावप्रसङ्गात्, तथा सति व्यवहारोच्छेद इति, यच्चोक्तं-' विवक्षया च वक्तृत्वम्' (श्लो० २१) इत्यादि, एतदप्ययुक्तं, विवक्षामन्तरेणापि क्वचित् वक्तृत्वसिद्धेः, सुप्तमत्तादिषु तथादर्शनात्, तत्रापि साऽस्त्येवेतिचेत्, न, तथा प्रतीत्यभावात्, प्रबुद्धादावुक्तस्मरणानुपलब्धेः, तथापि

तत्कल्पनेऽतिप्रसङ्ग, कातरविपक्षायां कश्चिच्छूरशब्दप्रयोगदर्शनात्, तत्राप्यन्तराले शूरविवक्षाऽस्तीति चेत् ?, न, प्रमाणाभावात्, तच्छब्दप्रयोगान्यथानुपपत्ति प्रमाणमिति चेत्, न, सन्देहानिवृत्तेः अविवक्षापूर्वकस्येऽपि विरोधासिद्धेः, तदभावे स्वहेतुकत्वेन सदा तच्छब्दप्रयोगापत्तेर्विरोधसिद्धिरिति चेत्, न, अहेतुकत्वासिद्धेः तथाविधभावाभ्यासात्मप्रयत्नहेतुकत्वात्, तेषां च तथाविधस्वभावस्याभ्यासादिनियन्धनत्वात्, अन्यथा विवक्षाया अपि सदाभावेनोक्तदोषानतिवृत्तेः,—अमनस्कत्वेन च भगवत इच्छानुपपत्तिः, तथा वाग्योगस्य च चेष्टामात्रत्वात्, ' ततश्च सा चेच्छाभावतो हि यद्राग ' इत्येतदप्यपार्थकमेव, तत्रेच्छाभावासिद्धेः, मायेऽपि शुद्धेच्छाया रागायोगात्, तथा लोकप्रतीतेः, ततश्च वक्तृत्वादसर्वज्ञ इति वाङ्मात्रमेव॥

संक्षेपादिति सर्वज्ञ , सन्न्यायोक्त्या निदर्शितः ॥ सामान्येन विशेषस्तु, ज्ञेयस्तद्वाक्यतो बुधैः ॥४७॥ वाक्यलिङ्गा हि वक्तारो, गुणदोषविनिश्चये ॥ क्रियालिङ्गा हि कर्तारः, शिल्पमार्गे यथैव हि ॥ ४८ ॥ दृष्टेष्टाव्याविरुद्धार्थं, सर्वसत्त्वसुखावहम् ॥ मित गम्भीरमाल्हादि, वाक्यं यस्य स सर्ववित् ॥४९॥ एवम्भूत तु यद्वाक्यं जैनमेव ततः स वै ॥ सर्वज्ञो नान्य एतश्च, स्याद्वादोक्त्यैव गम्यते ॥ ५० ॥ न नित्यैकान्तवादे यद्, बन्धमोक्षादि युज्यते ॥ अनित्यैकान्तवादेऽपि, बन्धमोक्षादि युज्यते ॥ ५१ ॥ जीवः स्वभावभेदेन, बध्यते मुच्यते च मः ॥ ऐक्यापत्तेस्तयोर्नित्य, तथा बन्धादिभावतः ॥ ५२ ॥ तयोरत्यन्तभेदेऽपि, न बद्धो मुच्यते कश्चित् ॥ एवं च सर्वशास्त्रोक्त, भावनादि निरर्थकम् ॥५३॥ नाचेतनस्य बन्धादि, केवलस्यैव युक्तिमत् ॥

अप्रतीतेस्तदेकत्व-नित्यत्वादेश्च सर्वथा ॥ ५४ ॥ सन्तत्यपेक्षयाऽप्येत-न्निरन्वयविनाशिषु ॥ तदभावात्तथा-
भेदा-देकान्तेन न युज्यते ॥ ५५ ॥ एतच्च सर्वमन्यत्र, प्रबन्धेनोदितं यतः ॥ ततः प्रतन्यते नेह,
लेशतस्तूक्तमेव हि ॥ ५६ ॥ अतः स्याद्वादनीत्यैव, परिणामिनि बोद्धरि ॥ तथा चित्रस्वभावे च,
सर्वं बन्धादि युज्यते ॥५७॥ य एव बध्यते जीवो, मिथ्यात्वादिसमन्वितः ॥ कर्म्मणा मुच्यते सम्य-
क्त्वादियुक्तः स एव हि ॥ ५८ ॥ बद्धोऽहमिति निर्वेदात्, प्रवृत्तिरपि युज्यते ॥ परिणामित्वतस्तस्य,
तत्क्षयाय कदाचन ॥ ५९ ॥ तपःसंयमयोगेषु, कर्म्मबन्धदवाग्निषु ॥ प्रवृत्तौ तत्क्षयाच्छुद्धि-र्मोक्षश्चानु-
पचारतः ॥ ६० ॥ स तादृक्किं न निर्वेदात्, सर्वेषामेव देहिनाम् ॥ युगपज्जायते किञ्च, कदाचित्
कस्यचिन्ननु ? ॥ ६१ ॥ अनादिभव्यभावस्य, तथाभावत्वतस्तथा ॥ कर्म्मयोगाच्च निर्वेदः, स तादृक् न
सदैव हि ॥ ६२ ॥ स्यादनेकान्तवादेऽपि, स स्यात् सर्वज्ञ इत्यपि ॥ न्याय्यमापद्यते तेन, सोऽपि नैकान्त-
सुन्दरः ॥ ६३ ॥ स्वगतेनैव सर्वज्ञः, सर्वज्ञत्वेन वर्त्तते ॥ न यः परगतेनापि, स स इत्युपपद्यते ॥ ६४ ॥
अन्यथाऽन्यगतेनापि, वर्त्तनात्वेन सोऽन्यवत् ॥ अन्यः स्यादित्यनेकान्ता-देव तद्भावसंस्थितिः ॥ ६५ ॥
अन्येषामिव भावानां, स्वसत्ता तद्बलाद्यतः ॥ अतः सञ्चिन्त्यतां सम्यक्, कथं नैकान्तसुन्दरः ? ॥ ६६ ॥
एवं च सिद्धः सर्वज्ञ-स्तद्वाक्यात् जिन एव तु ॥ तस्मादलं प्रसङ्गेन, सिद्धार्थो हि यतो वयम् ॥ ६७ ॥

कृत्वा यदः प्रकरणं भुवनैकसारं, सर्वज्ञरत्नगतमोहविनाशहेतुः ॥

...समस्तपुंसां, मात्सर्यदुःखविरहेण गुणानुरागः ॥ १८ ॥

सर्वज्ञसिद्धिप्रकरणं समाप्तम् । कृतिः सिताम्बराचार्यश्रीहरिभद्रपादानाम् ॥

सम्पूर्णमिदं परमप्रभावकभगवत्स-पूर्वधरासमकालवर्ति-सूरिपुरन्दर-चतुश्चत्वारिंशदुत्तरचतुर्दशशतग्रन्थप्रासादसूत्रणसूत्रधार-सकलागमपारावारपारीण-भगवच्छ्रीहरिभद्रसूरिप्रणीतं दृष्टिवादनिस्यन्दरूपं-योगदृष्टिसमुच्चय-योगबिन्दु-षोडशक-शास्त्रवार्तासमुच्चय-षड्दर्शनसमुच्चय-द्वात्रिंशदष्टकप्रकरण-लोकतत्त्वनिर्णय धर्मबिन्दुप्रकरण-(शुचिगतपद्यसङ्ग्रह)-हिंसाफलाष्टकप्रकरण-सर्वज्ञसिद्धिप्रकरणरूपं संस्कृतभाषाप्रतिबद्धं ग्रन्थदशकम् ॥

॥ पूर्वाचार्यविहिता श्रीहरिभद्रसूरिभगवत्स्तुतिः ॥

भावमन्थिमभाविभकटपटुरणत्कारवाग्भारदुष्ट-प्रेङ्खद्दर्पिष्ठदुष्टप्रमदवशभुजास्फालनोत्तालवालाः ॥
यद्वद्वा मुक्तवन्तः स्वयमतनुमदं वादिनो हारिभद्रं, तद्गम्भीरप्रसन्नं न हरति हृदयं भाषितं कस्य जन्तोः ॥ १ ॥
नित्यं श्रीहरिभद्रसूरिगुरवो जीयासुरत्यद्भुत-ज्ञानश्रीसमलङ्कृताः सुविशदाचारप्रभाभासुराः ॥
येषां वाङ्मयया प्रसन्नतरया शीलाम्बुसम्पूर्णया, मज्जत्स्वेह न कस्य कस्य विदधे चेतोमलक्षालनम् ॥ २ ॥
विषं विनिर्धूय कुवासनामयं, व्यचीचरद्(रीरच)यः कृपया मदाशये ॥
अचिन्त्यवीर्येण सुवासनासुधां, नमोऽस्तु तस्मै हरिभद्रसूरये ॥ ३ ॥